58

# ॥ दशावतारस्तोत्रम् ॥



भागवताङ्घ्रिरेणुना
अम्बिल्. वेङ्कटगोपालदासेन विरचितया
व्याख्यया सहितम् ।






श्रीरङ्गस्थ
श्रीवाणीविलासमुद्रायन्त्रालये
संमुद्रितम् ।
१९२८.



॥ श्रीः ॥

# ॥ दशावतारस्तोत्रम् ॥

श्रीनिवासं परं ब्रह्म तन्नाम्नश्च गुरूत्तमान् ।
वन्दे भागवतान्सर्वान्देशिकाशयलब्धये ॥

व्यङ्ग्यप्रधाना गम्भीरा निगमान्तगुरोर्गिरः ।
दर्शयन्तु प्रसादेन कृत्स्नं स्वं भावमञ्जसा ॥

**इदं स्तोत्रं कविहृदयानुसारेण सम्यग्भावितमदृश्यब्रह्माध्य-क्षणे रसस्वरूपब्रह्मरसस्य भावुकहृदयसंक्रान्तौ चोपकुर्यादिति प्रदर्शयिष्यते । अधोक्षजस्य ब्रह्मणः सकलमनुजनयनविषयी-**

करणं तदवतरणैर्निर्वर्त्यते । मन्दभाग्या वयं पुरावृत्तानवताराध्यक्षयितुं पारयामः । न वयं तत्कृतपरावरनिखिलजनमनोनयनहारिनवनीतनटनादिदिव्यचेष्टितान्यनुभवामः, तेषामतिक्रान्तत्वात्, अतिक्रान्तदर्शनदक्षसूक्ष्मदृष्टेरस्माकमभावात् । यदि वयं भावुकत्वं रसिकत्वं च संपादयेम, शुकपराङ्कुशपरकालादिवद्वयं भिन्नकालानपि तानवतारानध्यक्षयेम । 'अध्यक्षितो भावुकैः' इत्याचार्यैरस्ति चेद्भावुकत्वमतिक्रान्तमप्यध्यक्ष्येतेति व्यज्यते । 'पिबत भागवतं रसमालयं मुहुरहो रसिका भुवि भावुकाः ।' इति श्रीशुक एतद्दर्शयति । भागवतो रसः रसस्वरूपो भगवानेव वा, 'समेत्य ब्रह्मसंस्पर्शं सुखमत्यन्तमश्नुते' इत्युक्ततत्संस्पर्शजन्यात्यन्तसुखभूतो रसो वा, अमृतद्रवभूतशुकमुखगलिततदास्वादितफलरसग्रन्थो वा । शाखारूढः शुकोऽच्युतं फलमासाद्य 'एकाकी न रमेत' 'एकः स्वादु न भुञ्जीत' इति च न्यायमनुसृत्य तमच्युतं रसमस्मत्पानाय स्वमुखाच्च्यावयति । 'रसो वै सः, रसं ह्येवायं लब्ध्वानन्दी भवति' इत्यानन्दमयस्यानन्दरसघनत्वं श्रावितम् । रसिका भावुकास्तद्रसचर्वणाधिकारिणः । ते संबोध्यन्ते 'रसिका भावुकाः' इति । निगमकल्पतरोर्गलितं फलं शारीरकप्रमितफलभूतो भगवान्भवेत् । यावल्लयं पेयो

रसः, मण्डपूपो यथा मधुकरैः । भुवीति निवृत्ततर्षा नित्य-मुक्ता व्यावर्त्यन्ते । लयश्च विगलितवेद्यान्तरमनुभाव्यरसत-न्मयतापत्तिः । 'तन्मयत्वं रसेषु' इति नटस्याभिनेयभाव-तन्मयतायां भावुकसभ्येषु तद्भावसंक्रान्तिः सुलभा । रामा-यणादिषु सीतारामशोकवर्णनप्रकरणेषु वयं रुदिमः स्थूल-स्थूलाश्रयनमुकुलैर्बाष्पबिन्दून्प्रतिकलं मुञ्चामः । ध्रुवं वयं तदानीं करुणापराधीनास्तद्रसमयतां प्राप्नुमः । तच्च श्रव्य-काव्ये पाठ्ये गेये च मधुरे । कथानायकनायिक्यौ रुदितः । तच्छोकद्रष्टा ऋषिस्तिर्यग्दम्पतिवियोजनदर्शनेऽपि करुणवेदी शोकाविष्टो भवति । तस्य शोकः श्लोकत्वमापद्यते । तच्छो-कभरितश्लोकान्वयं श्रुत्वा शोकेनाविश्यामहे । ऋषेर्दर्शनम-तिक्रान्तव्यवहितदर्शनमनुग्रहलब्धदिव्यचक्षूरूपधर्मवीर्येण सं-पन्नम् । न साक्षात्तद्वृत्तान्तकाले स प्रत्यक्षदर्शी । कालदेश-व्यवहितमपि तेन धर्मवीर्येण यथावत्प्रत्यक्षीकृतम् । तत्प्रत्यक्षी-कृतं सोऽस्मान्श्रावयति स्वशोकभरितैः श्लोकैः । तैश्च वयं पुरा-वृत्तान्तमिदानीन्तनमिवानुभूय नायकनायिकासमानशोका भ-वामः । सुदूरबहुविप्रकर्षपरम्पराव्यवधानेऽप्यध्यक्षीकरण-समर्थता नापैतीत्यनुभवसिद्धम् । अनुग्रहलब्धधर्मवीर्य-तुल्यवीर्यमस्त्युत्तमार्षकाव्यस्य श्रोतॄणां पठितॄणां च प्रति-

पाद्यरसतन्मयतापादने । दृश्यकाव्येषु नाटकेषु नाट्यमानेषु नृत्ते चाभिनेयस्य स्थायीभावस्य सभ्यानुभवगोचरतापत्तिः सुलभतरा । तत एव तत्काव्यानां दृश्यत्वविशेषणम् । यदि रस एव नायको नटश्च भवेत्तच्चेष्टितं कृत्स्नं रसमयं स्यात् । आनन्दमयस्य भगवतो मुख्यं रसत्वम्, तत्संबन्धेनेतरसुखानां रसत्वमिति च श्रावयन्ति श्रुतयः । 'रसो वै सः, रसं ह्येवायं लब्ध्वानन्दी भवति ।' इति तैत्तिरीयश्रुतिः । यद्यत्सुखत्वेन लौकिका मन्यन्ते तत्सर्वं सवासनं परित्यक्तं अयमिति निर्दिष्टेन मुमुक्षुणासङ्गब्रह्मातिरिक्तसर्वसङ्गदृढपरित्यागिनासङ्गशस्त्रेण सुविरूढमूलसंसारवृक्षस्य दृढच्छेदिना । पुत्रेषणाया वित्तेषणाया लोकेषणायाश्च व्युत्थाय भिक्षाचर्यं खल्वयं ब्राह्मणश्चरति । ब्राह्मण इति ब्रह्ममात्रसंस्पर्शवान्स्पर्शान्तररहितः । यदि दारपुत्रास्त्यक्ताः क एनं पोषयेदन्नादिना । स्याद्वित्तम्, येन पाचकान्संपाद्य तैर्भरणं कार्यतेति चेत्तदपि त्यक्तम् । यदि तदप्यत्यक्ष्यत केनायमभोक्ष्यत? तत्रोच्यते— 'भिक्षाचर्यं चरति' इति । चर गतिभक्षणयोः । पूर्वो गतौ । द्वितीयो भक्षणे । भैक्ष्यहेतोर्न चरणादधिकं कुर्यात् । न भिक्षामपि याचेत वाचा 'भिक्षां देहि' इति गुरुकुले वर्तमानमाणवकवत् । अटन-

मात्रं कुर्याद्वीथीषु । यदि यदृच्छया कारुणिकैर्जनैः शिक्ये किमप्यन्नं प्रक्षिप्येत तच्चरेद्भक्षयेत् । चरणमात्रलब्धं चरेदिति श्रुत्यर्थः । न केवलं सुखसाधनानि परित्यक्तानि, दृष्टविधया क्लेशभूताः सर्वेऽपि पारमैकान्त्यधर्मास्तीव्रमविच्छिन्नमनुष्ठीयन्ते । सर्वसुखपरित्यागी बहुक्लेशपरिगृहीत्यानन्दसागरमग्नः सततहृष्टो दृश्यते । अत्रावधूतयदुसंवादः स्मर्तव्यः । 'अवधूतं द्विजं कञ्चिच्चरन्तमकुतोभयम् । यदुर्निरीक्ष्य पप्रच्छ' 'त्वं हि नः पृच्छतां ब्रह्मन्नात्मन्यानन्दकारणम्' 'ब्रूहि' इति । अवधूतस्यानन्दभरितत्वदर्शनेन विस्मितः संराट् स्वेन स्वप्नेऽप्यलब्धस्य तदनुभूयमानस्यानन्दस्य कारणं पप्रच्छ । केन रसेन सर्वसङ्गपरित्यागिनोऽस्य तपस्विनो हृदयं व्याप्तम्, येनासावानन्दभरितो वर्तते । किमयं चिन्तयति । 'मच्चित्ताः' इति भगवदेकचित्तोऽयम् । 'मद्गतप्राणाः' इति भगवच्चिन्तयैव प्राणिति । तत्स्मृत्यपहारे गतप्राणः स्यात् । रसभूमानं सर्वान्तरमानन्दमयमेवायमावृत्तचक्षुषा पश्यति, तमेव शृणोति, विजानाति ; नान्यत्पश्यति, शृणोति, विजानाति । अन्वयव्यतिरेकाभ्यां कार्यकारणभावो व्यवस्थाप्येत । अन्वयव्यतिरेकाभ्यामर्थापत्त्या चास्य रसान्तरविरक्तस्यानन्दपीनत्वं ब्रह्मसंस्पर्शहेतुकमिति निश्चीयते । एवंरीत्या सहे-

तुकं प्रदर्श्यते आनन्दमयस्य ब्रह्मणोऽस्तित्वं मातापितृसहस्रेभ्यो वत्सलतरया श्रुत्या। 'अस्ति ब्रह्मेति चेद्वेद' इत्यादिश्लोकः पुच्छवदानन्दमयविषये पठितः। ब्रह्मण आनन्दमयत्वेनास्तित्वं सर्वलोकहृदयारूढं यथा स्यात्तथा निरूपयति 'रसो वै सः, रसं ह्येवायं लब्ध्वानन्दी भवति' इति श्रुतिः सर्वाः प्रजाः सत्तां लभेरन्नित्याशया। प्रजानामसत्कल्पत्वं मातृदुःखाय भवेत्। श्रोत्रियस्य चाकामहतस्येत्यकामहतत्वं हेतूक्रियते निरतिशयानन्दप्राप्तौ। कथं सर्वतो विरक्तस्य रतिरिति चेदात्मकामोऽयम्, आत्मरतिः। 'अयम्' शब्देन त्यक्तसर्वपरिग्रहोऽभ्युपगतसमस्तक्लेशरूपधर्मैस्तपस्वी विवक्षितः। एवं च ब्रह्मणः स्वान्तरानन्दमयत्वेनास्तित्वं ब्रह्मविदनुभूयमाननिरतिशयानन्दनिदर्शनेन लोकायतिकानामपि हृदयारूढतया सुविशदं प्रदर्श्यतेऽनया श्रुत्या। प्रसन्नं मुखं ब्रह्मवित्त्वे स्पष्टं लिङ्गमिति 'ब्रह्मविद इव ते सोम्य मुखं भाति।' इत्युपकोसलं प्रत्याचार्यवचनं बोधयति। श्रुतिस्थमुखशब्दो ब्रह्मविदवयवान्तराणामप्युपलक्षणमिति दर्शयन्त्याचार्याः 'अङ्गान्यस्य मुहुर्मुहुः पुलकितान्यन्तर्मुखं मानसं चिन्ता च द्रुतशर्कराप्रतिनिधिः शीताश्रुणी लोचने।' इति संकल्पसूर्योदये 'आह्लादशीतनेत्राम्बुः पुलकी-

कृतगात्रवान् । सदा परगुणाविष्टो द्रष्टव्यः सर्वदेहिभिः ॥’ इत्युपबृंहणानुसारेण । परमात्मनो द्रष्टव्यतां विदधाति श्रुतिः । विश्वदेहिप्रभृतिसर्वदेहिभिर्ब्रह्मरसमग्नस्यात्मज्ञस्य द्रष्टव्यत्वं विधीयते उपबृंहणेन । नेत्रमुकुलगलदानन्दशीताश्रुभिरानन्दपुलकोद्गमादिभिश्च प्रत्यक्षलिङ्गैरान्तरा निश्चला रतिः प्रत्यक्षीक्रियते । पुलकीकृतगात्रवानिति मतुपा गात्रस्य सदाङ्कुरन्नवनवपुलकवत्त्वं व्यज्यते । प्रतिक्षणं नवनवाः पुलका उद्गच्छन्ति । तदेव ‘ मुहुर्मुहुः पुलकितानि ’ इत्याचार्यैरुच्यते । कण्ठकवराह इति प्रख्यातः श्वापदो हर्षक्रोधभयादिनिमित्तेषु कृत्स्नगात्रेऽपि कण्टकोद्गमं बिभर्ति । तत्र च कण्ठकवरत्वमन्वर्थम् । तत एव पुलकस्य कण्टकसंज्ञा कृता स्यात् । रसेन भगवता नटीभूय नायिकया सह निर्वर्तितलोकोत्तरभूमिकानामध्यक्षणेन भावुकचित्तं नियतं रज्येत । रसस्वरूपनटभावितरसेन तद्भावयितृचित्तं ध्रुवं व्याप्येत । तत्तदवताराणां यथावृत्तं विचित्रवर्णनेन दृश्यकाव्यादपि चारुतया श्रोतृचित्तरञ्जनं क्रियते आचार्यैः । तत्तदवतारविषयवर्णने महर्षिभिर्बहुग्रन्थैः कृतमेकेन श्लोकेनातिविचित्रं संगृह्यत इति दर्शयिष्यते ॥

चित ईश्वरश्च सर्वे नटाः । यद्यपि शुद्धं चैतन्यं तेषाम-

नुगतस्वरूपम् , ते विविधभूमिकाः परिगृह्य नटन्त एवासते। वयं नाट्येन भगवतो लीलारसमुत्पादयामः । सोऽत्रावतीर्य भूमिकां परिगृह्णन्नटन्नस्मानुद्दिधीर्षति । अस्मदार्तिस्तमध आनयति । अस्मदुन्निनीषया सोऽवतरति । कूपादिषु पतितान् शिशूंस्तत्रावतीर्णः पित्रादिरुद्दिधीर्षति । 'कान्तां प्राप्य विचित्रकर्मरचितां पर्यायतो भूमिकां केनाप्यद्भुतनाटकेन कमपि श्रीमन्तमानन्दयन् । कृत्वा शास्त्रमुखे मनः प्रतिमुखं गर्भावमर्शात्परं विद्यानिर्वहणेन लब्धनिर्भररसो ह्येष विद्योतते ॥' इत्याचार्या जीवपरिच्छेदान्ते न्यायसिद्धाञ्जने । शैलूषवद्विविधवेषपरिग्रहवन्तं भगवन्तं विविधभूमिकापरिग्रहैर्वयं लीलारसोत्पादनेन सन्तोषयामः । यदि कदाचिद्वयमहृदयमपि प्रपन्नरूपप्रणतवेषं परिगृह्णीमस्तन्मात्रेण संतोषितः श्रियःपतिरस्मान्हृदि भूषणत्वेन निधायात्मानं विद्योतयति । 'एष ह्येवानन्दयाति' 'तद्धेतुव्यपदेशाच्च' इति श्रुतिसूत्राभ्यां सर्वेतरानन्दहेतुभूतो भगवानपि अनयापूर्वया प्रणतभूमिकयानन्दितो भवति । अद्भुतनवनाटकेषु विशेषप्रीतिं कुर्वन्तो जनास्तद्द्रष्टुं प्रवेशदक्षिणां दत्वा नाटकशालामण्टपं गच्छन्ति, प्रजागरं च कुर्वते । तद्दिदृक्षायास्तीव्रत्वेऽद्भुतत्वं नूतनत्वं च निमित्तम् । प्रणतवेषश्चेतनस्य नूतनः, भगवतोऽद्भुतो नूत-

नश्च । सुदुर्लभः खल्वस्य प्रपत्तृजनः । 'न नमेयं हि कंचन' 'ईश्वरोऽहम' 'कोऽन्योस्ति सदृशो मया' इत्यहंभावमदमत्तेषु स्तब्धजनेषु सुदुर्लभाः प्रणन्तारः । अपूर्वाद्भुतत‍द्भूमिकापरिग्रहक्षण एव श्रिया सहितो भगवान्संतुष्यति । विस्मयते, आश्चर्यमाश्चर्यमिति वक्ति । अञ्जलिभरवहनमात्रमधिकं मातरं संतोषयितुम् ; गात्रप्रणामोऽपि तया नापेक्ष्यते । तस्यां प्रीणितायां तदिङ्गितपराधीनस्तत्पतिः सद्यः प्रीयेत । नटस्य विचित्रभूमिकया संतोषितो लौकिकः प्रभुः श्रीमांस्तस्मै पारितोषिकत्वेनाभरणादिकं दद्यात्तद्वक्षसि धर्तुम्, प्रभोर्बहुमतिप्रसादं जनानां प्रख्यापयितुं च । अयं तु विलक्षणो जगदीश्वरो नटमेवाभरणीकृत्य स्वहृदयेऽत्यन्तहृद्यत्वेन सततं धरति । तेन चात्मानं विद्योतितं मन्यते । 'कर्ता वा नाटकानामियमनुभवति क्लेशमस्मद्विधो वा' इति नाटकप्रणेता तत्क्लेशज्ञाता कविः । वयमेव नाटकवस्तु निर्माय नायका नटाश्च भूत्वा नटाम इत्याचार्याः । 'प्रपञ्चः कृत्स्नोऽपि रङ्गम् । तत्र सर्वेऽपि नटाः' इत्याश्लेयकविसार्वभौमः । नटो भगवान्नटैरस्माभिर्नटनेनाराध्येत । सगन्धेषु प्रीतिः सहजा । नटनक्लेशं नटो जानीयात् । एतदुच्यते चाचार्यैः 'स्वाधीनसंसरणनाट्यनिरूढवृत्तेः संतोषितः प्रणत-

भूमिकयास्य पुंसः । स्थाने विधास्यति विभुः स्थिरचिन्हभेदं क्रीडानटः स भगवान्कृपया स्वसाम्यम् ॥' इति । क्रीडानट इति प्रथमान्तपाठ आचार्यसंमतः स्यात् ॥

यज्ञादिभगवदुत्सवान्तेषु वयं भगवन्तं यात्रायातान्सुजननिवहांश्च नाटकनाटनेन नृत्तगीतादिना चाराधयामः । 'देवानामिदमामनन्ति मुनयः कान्तं क्रतुं चाक्षुषम्' इति नाट्योपाध्यायः । मुनयो भरतादयः । तच्च नाट्यं बहुधा भिन्नरुचेरपि जनस्यैकं समाराधनम् । अस्माभिर्विचित्रविविधनाटकैराराधितः कृतज्ञसार्वभौमो देवः श्रिया सह विविधभूमिकाः परिगृह्य नाटकानि निर्वर्तयति । 'देवानाम्' इति श्लोकपठितषष्ठ्यन्तदेवशब्दस्थाने एतत्स्तोत्रारम्भे प्रथमान्तदेवशब्द इत्यवधेयम् । तत्र नाट्यजनितप्रीत्युद्देश्या देवाः । देवोऽत्र स्वयं नटन्मनुष्याणां सभ्यानां प्रीतिविधाता । 'देवानाम्' इत्यस्य स्थानेऽत्र 'नः' इति । 'देवो नः' इति शब्दौ कालिदासश्लोकोक्तक्रमविपर्ययेण नटसभ्यान् प्रदर्शयत इव ॥

'नटवद्भूमिकाभेदैर्नाथ दीव्यन्पृथग्विधैः । पुंसामनन्यभावानां पुष्णासि रसमद्भुतम् ॥' इति यादवाभ्युदये । स च श्लोक एतत्स्तोत्राद्यश्लोकस्यात्यन्तसदृशः । निर्भरत्वरूपप्र-

पत्तिरसाविष्टानस्माभिर्भरं संपूर्णं रसं लम्भयितुं भगवान्राम-कृष्णादिभूमिकाः परिगृह्णाति । निर्भरस्य निर्भरो रसो देयः । निर्भरैः प्रपञ्चैर्निर्भरो रसः प्राप्यत इति चारु व्यज्यते आचार्यैर्लब्धनिर्भररसैरिति प्रथमश्लोके । भगवतो दशभूमिकानां भूमिकाभूतः प्रथमश्लोकः । 'प्रपञ्चं निष्प्रपञ्चोऽपि विडम्बयसि भूतले । प्रपन्नजनतानन्दसंदोहं प्रथितुं प्रभो ॥' इति ब्रह्मा ब्रह्म कृष्णं प्रति । तेनावतारप्रयोजनं दर्शितं भवति । तदेव प्रपन्नजनतानन्दसंदोहप्रथनमत्र प्रथमश्लोके प्रयोजनत्वेन कीर्त्यते 'नः शुभमातनोतु' इति । आतनोत्विति विस्तारणरूपप्रथनप्रार्थना । शुभमित्यानन्दसंदोहः । अद्भुतप्रपञ्चवेषपरिगृहीतिनोऽस्मांस्तन्मात्रप्रीतो देवः स्वाद्भुतभूमिकाभिरस्माकमद्भुतरसं पुष्णाति । 'धर्मसंस्थापनार्थाय' 'परित्राणाय साधूनाम्' इति सामान्येनोक्तमवतारप्रयोजनमत्र पर्यवस्यतीति चारु प्रत्यपादि गीताभाष्यारम्भे भूमिकापरिग्रहविषयभूमिकायामवतारविषयावतारिकायाम् । तदेव विशदतरमवाच्यवताररहस्यभाष्ये, तत्तात्पर्यचन्द्रिकायां च । गीताशास्त्रतात्पर्यभूतभक्तियोगमवतारयितुं भगवतावतारः कृत इत्युक्तं गीतावतारिकायाम् । अवतारावतारितो भक्तियोगोऽवतीर्णभगवतोऽपि मुख्यतर इति चारु व्यज्यते । लावण्यधाम्नः स्वाद्भुतदिव्य-

विग्रहस्य सकलमनुजनयनविषयीकरणं विना कथं विश्वममृतप्लावनेनाप्यायितं भवेत् । कथं चाक्रूरमालाकारादिपरमभागवतानां दृष्टिचित्तापहरणेन तद्भक्तिरूपधर्मवर्धनम् । अवतारितभक्तियोगरूपगीताया गीतेत्यसाधारणो व्यपदेशः । निरुपपदगीताशब्दो भगवद्गीतामभिदध्यात् । 'गीताः सुगीताः कर्तव्याः' इति ऋषिवचनम् । गीतान्तराणामनुगीता, शिवगीता, श्रुतिगीता, भ्रमरगीता, गोपिकागीतेति सविशेषनामान्येव भवन्ति ॥

अवतारप्रशंसायां ब्रह्मणोच्यते 'को वेत्ति भूमन्भगवन्परात्मन्योगेश्वरोतीर्भवतस्त्रिलोक्याम्' इति । तत्रावतरद्ब्रह्म भूमन्निति संबोध्यते । अल्पप्रत्यर्थिनो विभुभूतभूम्नोऽल्पभूमिकाभूतावतारवेषपरिग्रहः सर्वशक्तिं विना दुर्घट इति तेन संबोधनेन व्यज्यत इव । तदेव निपुणं प्रदर्श्यते आचार्यैः 'यस्यासौ भजते कदाचिदजहद्भूमा स्वयं भूमिकाम्' इति स्वज्ञानप्रदात्रीं हयवदनभूमिकारूपाचार्यभूमिकापरिग्रहीत्रीमादिमां देवतामुद्दिश्य । तेजोमयस्य देवस्य विभोर्भूमिकापरिग्रहः श्रमसाध्य इति प्रथमश्लोकपठितेन भूमिकाशब्देनाचार्या व्यञ्जयन्तीव । 'अजहद्भूमा स्वयं भूमिकाम्' इत्यवतारेषु सकलमनुजदृश्यत्वाय भूमिकापरिग्रहेऽपि निरतिशयबृहत्व-

रूपस्वभूमा न त्यक्ष्यत इति बोध्यते । विभुर्विष्णुः खल्ववतरति स्वं स्वभावमविहाय । भूमा च स्वस्वभावः । विष्णववतारे तद्वैभवमप्यवतरति । अन्यथावतीर्णो न विष्णुः स्यात् । 'वरये वैष्णववैभवावतारम्' इत्यतिमानुषस्तवप्रथमश्लोके श्रीवत्साङ्कमिश्रैर्भगवद्वैभवस्यावतारो व्यज्यत इव । 'अनासीद्द्दोषो जहद्वधिषाड्गुण्यमहिमा विहारस्वाच्छन्द्याद्विभुरिह दधानो विभवताम् । तिरश्चामप्येतैः कमठकिटिपाठीनिपतगप्रकारैराकारैः परिबृढतमत्वं द्रढयति ।' इत्याचार्याः सङ्कल्पसूर्योदये । सर्वैरुपसत्तुं योग्यं भगवन्तं दोष एक एव नासीदेदिति व्यज्यते 'अनासीदद्दोषः' इति । अशेषशरण्योऽपि न दोषशरण्यः । न दोषास्तस्मिन्शरणं लभेरन् । आसन्नेषु दोषं मृष्येत् 'दोषो यद्यपि तस्य स्यात्' इति । आसीदन्तं दोषं तु न मर्षयेत् । न तस्य किमप्यननुकूलवेदनीयं हेयं भवति । लोके हेयभूता रोषादयोऽपि तस्य निःसीमशक्तेः सुनिरसविषये प्रीतये स्युः । विभोर्विष्णोर्विभवरूपावतारो युक्त इति व्यज्यते 'विभुरिह दधानो विभवताम्' इति । 'ब्रह्म परिबृढं सर्वतः' इति यास्कनिर्वचनं ब्रह्मशब्दस्य । 'ब्रह्म ततमम्' इति श्रुतिः । तल्लक्षणसमन्वयार्थं स्वस्य परिबृढतमत्वं द्रढयितुं तिर्यग्भूतसर्वप्राणिप्रकाराकारप-

-रिग्रहं करोति विभुः । सर्वत्वाभावे कथं ब्रह्मत्वसंभवः सर्वत्वनिर्वाहार्थं ब्रह्मणो दाशदासकितवत्वादिकीर्तनं श्रुत्या तच्च सामानाधिकरण्यमंशांशिभावेनेति स्पष्टमुच्यते बादराय-णेनांशाधिकरणप्रथमसूत्रेण । तावता तादात्म्यरूपसामानाधि-करण्यं नोपपाद्येत । तादृशं च सामानाधिकरण्यं समर्थ्यते मीनकूर्मवराहाद्यात्मतयावतीर्णत्वेन । अवतारभूतमीनादिदे-हेषु न भगवता जीवेनात्मनानुप्रवेशः । न स्वांशभूतजीवद्वारा, किं तु साक्षात्पूर्णेन स्वेनैव । विहारस्वाच्छन्द्यादिति यदुक्तं तद्बोध्यते 'देवो नः' इति देवशब्देन । तिर्यग्भवनस्यातिनि-हीनत्वाद्दुर्घटत्वाच्च तद्बुद्ध्यते प्राथमिकैस्त्रिभिरवतारैः । 'ब्रह्म दाशा' इति श्रुतिर्विस्मयते भगवतो दाशसामानाधिकरण्यं वीक्ष्य । तिष्ठतु दाशैः शरीरशरीरिभावादिना तान्त्रिकं सा-मानाधिकरण्यं मुख्यममुख्यं वेति वितर्कितं वादिभिः । तैर्दा-शैर्जालैर्गृह्यमाणस्ततोऽपि निहीनो मत्स्य एव भवानि, तद्यो-निना मुख्यमविगीतं सामानाधिकरण्यं लभेयेति प्रथमं मत्स्यो भवतीव भगवान् । दाशानां मत्स्यमांससततसंसर्गेण दुर्ग-न्धवत्त्वं तन्निहीनत्वे हेतुः । संसर्गेण तन्निहीनतापादकमत्स्य एव भविताहमिति भगवदिच्छा प्रादुर्भवति । 'ब्रह्म कितवाः' इति श्रुतिः स्वयं मुख्यकितवोऽपि भवतीति 'गोपस्त्रीणां

जयति कितवः कोऽपि कौमारहारी' इत्याचार्यैर्व्यज्यते । 'ब्रह्म दासाः।' दास्यं सर्वप्रकारेण भगवान्सर्वप्राणिनां करोतीति बहुधा विचित्रं प्रदर्श्यते भगवतैव गीतासु । अन्तरवयवेष्ववस्थायास्मासु स्वपत्सु वैश्वानररूपो भगवान्भुक्तमन्नं पाचयति । बाह्यपाचका लोके भृत्यतया संपाद्यन्तेऽधिकमधिकं वेतनं प्रदाय । अयमन्तःपाचकः सर्वेषां प्राणिनाम् । ईदृशं स्वयं दास्यमाश्रितं भगवन्तं वीक्ष्य तद्विषये स्वयं दासा भवन्ति तपस्विन इत्युच्यते 'स्वयं दासास्तपस्विनः' इति । एषोऽप्यर्थो वर्णयितुं शक्यः । सूक्ष्मदृष्टीनां तपस्विनां भगवत्कृतान्तर्दास्यादिव्यापारो दृष्टिगोचरो भवति । तद्दृष्ट्वा ते तस्य स्वयं दासा भवन्ति । समुद्रशायिना भगवता स्ववासस्थानरूपसन्निकर्षवन्तं जलधिमधिकरणीकृत्य तत्र प्रथमं त्रयोऽवताराः परिजगृहिरे । अतिनिहीनयोनिष्ववतार अधोगमनरूपावतारस्य काष्ठां निर्वहेत् । अगाधजलधाववतीर्णोऽतिदुःखाधमवतरणं निर्वर्तयेदित्युच्येत । प्रत्यवतारमजहद्भूमत्वं निरतिशयवैभवं च प्रदर्श्यतेऽस्मिन्स्तोत्रे ॥

मेघभूतेन भगवता निरवधिकरुणाभारखिन्नत्वेनावतीर्यत इति चारु व्यज्यते श्रीमच्छङ्कराचार्यैर्भगवदवताराविषयश्लोके । 'मत्स्यः कूर्मो वराहो नरहरिणपतिर्वामनो जामदग्न्यः का-

कुत्स्थः कंसघाती मनसिजविजयी यश्च कल्कीभविष्यन् ।
विष्णोरंशावतारा भुवनहितकरा धर्मसंस्थापनार्थाः पायासुर्मां त एते गुरुतरकरुणाभारखिन्नाशयास्ते ॥' इति श्लोके । 'यश्च कल्कीभविष्यन्' इत्येतत् 'भाविन्या दशया भवन्' 'कल्कवाहनदशाकाल्किन्' इति च तदवतरणवर्णनस्य सुसदृशमिव । 'किं पात्रमन्नदाने क्षुधितं कोऽर्च्यो भगवदवतारः । को भगवान्महेशः शंकरनारायणात्मैकः ।' इति शंकराचार्यैः प्रश्नोत्तरमालिकायाम् । 'अन्नस्य क्षुधितं पात्रम् ।' आर्तार्तिपरिहरणेनैव करुणैकजीवितो भगवानात्मानं धारयेत् । आर्तिपरिहरणेनैव तत्करुणाया लब्धावकाशता । सदा क्षुधिता बुभुक्षिता भगवद्दया । घस्मरत्वमपि तस्या भवति । जगद्दुरितघस्मरा दयाशिशीरिता भगवदाशयाः । प्रणमदपराधास्तद्दयायाः प्रियमन्नपानम् । आर्तिपरिहरणं च तस्याः प्राणनम् । एतद्व्यज्यत इव श्रीशंकराचार्यैः क्षुधितस्यान्नपात्रत्ववर्णनानन्तरं भगवदवतारस्यार्च्यत्वं निर्धारयद्भिः । यथा क्षुधिता अन्नं याचन्ते तथार्तजनेभ्योऽर्चां याचते भगवानस्मल्लोकमागत्य । अञ्जलिं याचमानः कश्चित्खलु सः । 'अहमन्नमहमन्नम्' इति सततगीयमानमुक्तगीतया सङ्कीर्तनमात्रं क्रियते परमपदे । शब्दस्यान्नस्यैव लाभस्तत्र । न को-

ऽप्यपराधी तत्र। नाप्यार्तः। आर्त्यपराधात्यन्ताभावे क्षमादया-दिजीवितेन भगवता कथमात्मधारणं लभ्येत। तद्लाभेन क्षुधार्तो भगवानार्तिभूयिष्ठामपराधभूयिष्ठां बह्वन्नवतीं भुवमवतरति। ताभ्यां संपन्नानाढ्यानस्मांश्च याचते तदन्नं क्षुन्निवृत्तये। तं चाभ्यागतं वयं सम्यगाराधयितुमर्हामस्तन्निकटेऽस्मदार्तिनिवेदनेन 'क्षमस्व' इत्युक्तिपूर्वकमस्मदपराधसहस्रोपहरणेन च॥

अवतरन्तं च देवं देवी छायेवानुगच्छति। यथा सूर्यस्य देवी छाया, तथा 'सूर्यस्यापि भवेत्सूर्यः' इत्युक्तसूर्यसूर्यस्य श्रीः छाया। यथा स नटो भवति तथा सा नटी भवति। यथा सर्वगतो विष्णुस्तथा चेयम्। यथा स सर्वयोनिषु गच्छति तथेयमपि। तदपि व्यज्यत इव सर्वगतशब्देन। विभोर्विष्णोर्विभवपरिग्रहस्तया सहैव। 'यस्या वीक्ष्य मुखं तदिङ्गितपराधीनो विधत्तेऽखिलं क्रीडेयं खलु नान्यथास्य रसदा स्यादैकरस्यात्तथा।' ब्रह्मचर्याश्रमस्थस्यापरिग्रहत्वानिर्बन्धोऽपरिहार्यः। तथापि तां न जहाति। यत्तदाश्रमलिङ्गं कृष्णाजिनं तेनैव विद्युद्द्योतवतीं वक्षःस्थलगतां तां संवृणोति। सर्वलोकस्य पश्यतो वामनेनाणीयसा त्रिविक्रमभवनं नाद्भुतम्। ब्रह्मचारिणः सपत्नीकत्वम्, निरतिशयदीप्तिमत्यास्त्वे-

जोराशेर्भगवत्प्रभाया वक्षःस्थलविद्योतमानाया अजिनमात्रेण वैरोचनसदसि संवरणं चात्यन्तदुर्घटम् । दम्पती दिदृक्ष्येयातां भक्तजनैः । तद्दृष्टिगोचरीभवनं मुख्यं प्रयोजनम् । इतरदसुरनिरसनादिकं तदानुषङ्गिकं चशब्दसंगृहीतम् । 'श्रियं लोके देवजुष्टामुदाराम्' इति श्रुतिश्चान्वर्थनीया । यथा वैकुण्ठे परे लोके श्रिया सार्धममेयात्मास्ते, तथास्मिन्नवरे मानुषे लोके देव्या सह मेयात्मामेयात्मा चावतरति । करुणा खल्ववतारे निमित्तम् । अवतारकार्यं कृत्स्नं करुणाकार्यम् । तच्च करुणामिव रूपिणीं तां विना न घटेत ॥

अस्मिंस्तोत्रे आचार्यैर्मुख्यतया प्रतिपिपादयिषितं किमिति चेदवतारभूमिकानामपि ब्रह्मवद्बृहत्त्वम् । सशैलवनकाननार्णवस्य जगतो ब्रह्मशरीरत्वेन तच्छरीरैकदेशत्वेन च प्रदर्शनं ब्रह्मणो बृहत्त्वमुपपादयेत् । यदि ब्रह्मणो भूमिकानामेव वाङ्मनसातीतं बृहत्त्वमभ्यक्ष्येत किमु वाच्यं भूम्नस्तस्य निरतिशयबृहत्त्वे । ब्रह्मलक्षणवर्णनशब्दैर्निरतिशयबृहत्त्वमुपलक्ष्यमिति भाषितम् । यदा लक्ष्यं ब्रह्मैवावतरति तेनापि निरतिशयबृहत्त्वोपलक्षणं न्याय्यम् । कृत्स्नस्य जगतस्तदाधेयत्वतच्छेषत्वतन्नियाम्यत्वानां सकलमनुजनयनविषयतया प्रदर्शनेन विश्वस्य शास्त्रादवगतं ब्रह्मशरीरत्वम-

परोक्षितं स्यात् । कारणत्वविशिष्टं तदुपलक्षितं वा ब्रह्म जिज्ञास्यत्वेन विहितम् 'तद्विजिज्ञासस्व' इति । तादृशस्य ब्रह्मणो ध्येयत्वं विहितम् 'कारणं तु ध्येयः' इति । उभयविभूतिविशिष्टं ब्रह्मैव फलदशायामनुभाव्यम् । 'सर्वं खल्विदं ब्रह्म तज्जलान्' इति शाण्डिल्यश्रुतिः कृत्स्नस्य जगतो ब्रह्मात्मकतयानुसन्धानमुपदिशति तज्जलानिति हेतूपन्यासपूर्वकम् । दहरविद्या यद्यप्यन्तःकलेवरं सुसूक्ष्मं दहराकाशमन्वेष्टव्यत्वेन विदधाति, 'उभे अस्मिन् द्यावापृथिवी अन्तरेव समाहिते' 'यावान्वा अयमाकाशस्तावानेषोऽन्तर्हृदय आकाशः' इत्यादिना तस्य निरतिशयबृहत्त्वमपि कथयति । श्रीशंकराचार्याश्च तदधिकरणभाष्ये 'अस्मिन्कामाः समाहिताः, एष आत्मापहतपाप्मा' इति हि प्रकृतं द्यावापृथिव्यादिसमाधानाधारमाकाशमाकृष्य 'अथ य इहात्मानमनुविद्य व्रजन्त्येतांश्च सत्यान्कामान्' इति समुच्चयार्थेन चशब्देनात्मानं कामाधारमाश्रितांश्च कामान्विज्ञेयान्वाक्यशेषो दर्शयति । तस्माद्वाक्योपक्रमेऽपि दहर एवाकाशो हृदयपुण्डरीकाधिष्ठानः सहैवान्तस्थैः समाहितैः पृथिव्यादिभिः सत्यैश्च कामैर्विज्ञेय उक्त इति गम्यत इत्यभाषिषत । कृत्स्नविशिष्टब्रह्मण उपासनं तेषां संमतम् । विशेषणत्वश्चाधेयत्वादि-

नेति स्पष्टमुक्तम् । भूमविद्या सर्वस्य जगतस्तदुत्पन्नत्वं श्रावयति । सद्विद्या चास्य जगतः सन्मूलत्वसदायतनत्वसत्प्रतिष्ठत्वप्रदर्शनेन सदात्मकत्वं निगमयति । तदेव जन्मादिहेतुत्वं तज्जलानिति संग्रहेण सूच्यते शाण्डिल्यश्रुत्या । आत्मनः सर्वसुखहेतुतयान्वेष्टव्यतां पत्न्या उपदिशन्याज्ञवल्क्यः 'इदं सर्वं यदयमात्मा' इत्यात्मनः सर्वात्मकतां बोधयति । 'सत्यं ज्ञानमनन्तं ब्रह्म' इति लक्षितस्य ब्रह्मण आनन्त्यरूपनिरतिशयबृहत्त्वोपादनाय सर्वस्य तत्संभूतत्वं दर्शयति 'आत्मन आकाशः संभूतः' इत्यादिना । य आकाशस्तार्किकैर्नित्यत्वेन निर्णीतः सोऽप्याकाश एतस्मादात्मनः संभूत इति प्रथमं प्रदर्श्यते । यद्यपि तार्किका ईश्वरम् , तस्य निमित्तकारणत्वं च मन्वते, न ते ब्रह्म निरतिशयबृहत्त्वेन मन्वते, जगतस्तदुपादेयत्वानभ्युपगमात् , उपादानत्वानभ्युपगमे वस्तुपरिच्छेदस्यापरिहार्यत्वात् , तत्परिच्छेदे सत्यानन्त्यरूपानिरतिशयबृहत्त्वस्यासिद्धेः ॥

इदमेव चारु व्यनक्ति श्रुतिः 'नावेदविन्मनुते तं बृहन्तम्' इति । अवेदवित्तार्किकादिर्यद्यपि ब्रह्म मनुते, तद्बृहन्न मनुत इति तदर्थः । वैश्वानरविद्या स्पष्टमेव स्वर्लोकवाताम्बरादेर्भगवदवयवत्वं ब्रवीति । मुण्डके च द्युभ्वाद्यायतनत्वं वर्ण्यते

'जगत्सर्वं शरीरं ते' इति प्राचेतसगुरोर्ब्रह्मणो वचनं वर्ण्यते प्राचेतसेन रामाभिधानं हरिं प्रति । 'तत्रैकस्थं जगत्कृत्स्नं प्रविभक्तमनेकधा । अपश्यद्देवदेवस्य शरीरे पाण्डवस्तदा ॥' इति भगवतो विश्वरूपे कृत्स्नं विश्वमर्जुनो ददर्श । शिशोः कृष्णस्य वक्त्रे विश्वं ददर्श यशोदा । सार्वात्म्यविशिष्टभगवदैकात्म्यप्रत्ययसारैर्मुमुक्षुभिर्भवितव्यम् । तथैव तैः सदा अनुसन्धानं कार्यम् । 'ऐकात्म्यप्रत्ययसारं शान्तिसमृद्धममृतानन्दम्' इति माण्डूक्योपनिषद्विशिष्टैकात्म्यानुभवेनैकरस्यं बोधयति । इदमेव विशिष्टाद्वैतदर्शनं भवति । 'अशेषचिदचित्प्रकारं ब्रह्मैकमेव तत्त्वम्' इति वदन्त आचार्या एतदेव तत्त्वदर्शनं विदधति । 'पृथक्त्वेन तु यज्ज्ञानं नानाभावान्पृथग्विधान् । वेत्ति सर्वेषु भूतेषु तज्ज्ञानं विद्धि राजसम् ॥' इति पृथक्त्वज्ञानं भगवता राजसत्वेन जगर्हे । 'सर्वभूतेषु येनैकं भावमव्ययमीक्षते । अविभक्तं विभक्तेषु तज्ज्ञानं विद्धि सात्त्विकम् ॥' इति सात्त्विकज्ञानं लक्ष्यते भगवता । तदेव सम्यग्दर्शनं स्यादिति भगवन्मतम् । तच्च जगद्विशिष्टब्रह्मण एकत्वेन ऐकात्म्यप्रत्ययसारतयानुभवः स्यात् । एतस्य श्लोकस्यैवमर्थवर्णनं शक्यम् । 'ज्ञानयज्ञेन चाप्यन्ये यजन्तो मामुपासते । एकत्वेन पृथक्त्वेन बहुधा विश्वतो मुखम् ॥'

इति गीताश्लोकभाष्ये 'बहुधा पृथक्त्वेन जगदाकारेण विश्वप्रकारमवस्थितं मामेकत्वेनोपासते । एतदुक्तं भवति—भगवान्वासुदेव एव नामरूपविभागानर्हातिसूक्ष्मचिदचिद्वस्तुशरीरः सन् सत्यसंकल्पो विविधविभक्तनामरूपस्थूलचिदचिद्वस्तुशरीरः स्यामिति संकल्प्य स एक एव देवतिर्यङ्मनुष्यस्थावरान्तविचित्रजगच्छरीरोऽवतिष्ठत इत्यनुसन्दधानाश्च मामुपासते' इति भाषितम् । तादृशसर्वप्रकारविशिष्टैकब्रह्मणोऽनुसन्धाने वासुदेवमन्त्रस्य तात्पर्यमिति तात्पर्यचन्द्रिकायां प्रदर्शितम् । अत एव भगवता 'वासुदेवः सर्वमिति प्रपद्यते' इत्युक्तमिव । सर्वविशिष्टैकविशेष्यब्रह्मज्ञानं सम्यग्दर्शनम् । तादृशज्ञानेनैकरसता, शान्तिश्च सम्यक्सिद्ध्येतामिति शाण्डिल्यश्रुतिः स्पष्टं ब्रवीति । सर्वभूतानां ब्रह्मात्मकत्वेनानुसन्धानं सर्वत्र समदर्शनमावहति, मित्रामित्रकथां कथाशेषतां नयतीत्यशेषसाधूपमानभूतप्रह्लादस्यानुभवः । जगतो ब्रह्मशरीरत्वं श्रुतिः श्रावयतीति न केऽपि विप्रतिपद्यन्ते । शरीरत्वं चान्तः स्थितेन ब्रह्मणा नियाम्यत्वरूपमिति 'यः पृथिव्यां तिष्ठन् पृथिवीमन्तरो यमयति यस्य पृथिवी शरीरम्' इत्याद्यन्तर्यामिब्राह्मणे स्पष्टं श्राव्यते । परमात्मनियाम्यं कृत्स्नं जगदिति सर्वेऽभ्युपगच्छन्ति । शरीरप्रतिसंबन्धी

आत्मशब्दो नियन्तृचेतनवाची । शरीरशरीरिभावेन तयोः सामानाधिकरण्यं समर्थ्यते न्यायामृततरङ्गिण्याम् । कृत्स्नस्य जगतोऽस्माकं च स्वात्मकत्वं निरस्य भगवदात्मकत्वेन तदपृथक्त्वेन तदद्वैततया अद्वैतानुभवोऽस्माभिः सततमभ्यसनीयः । आरम्भणाधिकरणोक्तानन्यत्वं ब्रह्मव्यतिरेकेणाभाव इति श्रीशाङ्करभाष्ये । 'अनन्यत्वमिति नाभेदं ब्रूमः, किंतु भेदं व्यासेधामः' इति तदधिकरणभामत्यभेदेऽरुचिं कण्ठरवेण ब्रवीति । 'अनन्याश्चिन्तयन्तो मां ये जनाः पर्युपासते' इति श्लोकभाष्ये 'पर्युपासते सर्वकल्याणगुणान्वितं सर्वविभूतियुक्तं मां परित उपासते अन्यूनमुपासते' इति भाषितम् । 'अन्यूनमित्यखण्डितगुणविभूतिकमित्यर्थः' इति चन्द्रिका । इममखण्डार्थमखण्डानुभवं च वयं रोचामहे । विशिष्टस्याद्वैतेनानुभवमभ्यसिसिषामो न विशेष्यमात्रस्य निर्विशेषाद्वैतम् । 'एवं धर्मान्पृथक्पश्यंस्तानेवानुविधावति' इति कठवल्ली धर्माणां विशेषणानां ब्रह्मणः पृथग्दर्शनमनर्थहेतुतया निन्दति । विश्वस्य भगवच्छरीरत्वं तदन्तस्थत्वं च प्रत्यक्षं निदर्शितमर्जुनस्य निजैश्वररूपदर्शनेन भगवता । यद्यपि न तावन्मात्रमैश्वररूपप्रदर्शनमवताररूपेषु सर्वेषु, यथा विश्वरूपे, अस्त्येव तत्रापि ब्रह्मत्वप्रदर्शनं नियाम्यजगद्विशि-

ष्टब्रह्मानुभावनं चेत्यस्मिंस्तोत्रे आचार्यैः सम्यक्प्रदर्श्येत इति प्रदर्शयिष्यते । तत्त्वप्रदर्शनमवतारकृत्यम् । जगन्नियन्तृ जगद्विशिष्टं निरतिशयबृहद्ब्रह्मैकमेव तत्त्वमित्यवतारैः सकललोकसाक्षिकं प्रदर्श्यते ॥

यत्किंचिद्विशेषमात्रविशिष्टानुभवः खण्डानुभवः स्यात् । सर्वविशिष्टस्य कथं खण्डत्वम् । सर्वविशेषविशिष्टं कथमनुभवपथं गच्छेदिति चेत्— सर्वविशेषाणां ब्रह्मकार्यत्वशेषत्वाद्यनुगतैकाकारेणेति ब्रूमः । एवमेवैकब्रह्मज्ञानेन सर्वविज्ञानसमर्थनं श्रुत्या । सद्विद्याप्रतिपाद्यस्य कारणस्य यथाकथंचिद्विशिष्टत्वमेव सर्वैरभ्युपगम्यत इति चारु प्रदर्श्यते आचार्यैः 'मायोपाधिस्वशक्तिव्यतिकरितपरब्रह्ममूलः प्रपञ्चो येषां तेऽप्यद्वितीयश्रुतिमवितथयन्त्यत्र तत्तद्विशिष्टे । अप्राधान्यात्तथा नः प्रकृतिपुरुषयोरन्तरात्मप्रधाने वाक्येऽस्मिन्स्थूलसूक्ष्मान्वय इति जगतोऽनन्यभावोपपत्तिः ॥' इति श्लोके । विशिष्टानुभव आवर्तनीयो निरन्तरमन्यूनपूर्णोपासनलाभाय । प्राप्यानुभवो विशिष्टः । 'यदेवेह तदमुत्र यदमुत्र तदन्विह' इति श्रौतप्रदर्शनमनुसृत्य प्राप्यानुभवो यथाशक्त्यत्रैवाभ्यसितुमुचितः । द्वितीयादर्शनं वदन्ती श्रुतिः 'न ततोऽन्यद्विभक्तमस्ति यत्पश्येत्' इति द्वितीयविभक्तपदार्थस्याभावं नि-

षेधगम्यत्वेन बोधयति ॥

सूत्रकारश्च कार्यस्य कारणानन्यत्वं सूत्रयति, नैक्यम् । फलदशायां चाविभागमेव प्रतिजानीते 'अविभागेन दृष्टत्वात्' इति, नैक्यम् । 'तन्निष्ठस्य मोक्षोपदेशात्' इति सान्निष्ठ्यं मोक्षोपायतया सूत्रयति । स्वमात्रविश्रान्तिरूपस्वनिष्ठता न मोक्षप्रापिका । कृत्स्नस्य चिदाचित्प्रपञ्चस्य तदन्तर्गतस्य स्वस्यापि ब्रह्ममयता भावनीया अभ्यसनीया सात्मीकार्या च । तादृशानुभवः प्रमा । पृथक्त्वानुभवो भ्रमः । प्रपन्नश्च ब्रह्ममयतां प्रपन्नः स्यात् । 'त्वां चिन्तयंस्त्वन्मयतां प्रपन्नः' इति वदन्त आचार्या एतत्सूचयन्तीव । शास्त्रेणैतदात्म्यमिदं सर्वमित्युक्ते स्वव्यतिरिक्तस्य सर्वस्य ब्रह्मापृथक्त्वं झटित्यभ्युपगच्छामः तदपृथक्त्वस्यास्मत्प्रत्यक्षानुभवाविरुद्धत्वात् । अस्माकं तदपृथक्त्वे न तूर्णं विश्वसिमः, पृथक्त्वाभिमानस्यास्माकमत्यन्तदृढत्वात् । शास्त्रवासनया सुदृढश्रद्धया दृढाभ्यासेन च स्वपृथक्त्वबुद्धिर्व्यपोह्येत । अत एव श्रुतिः प्रथमं सर्वस्येदम ऐतदात्म्यरूपं सदात्मकत्वमुपदिश्यान्ते 'तत्त्वमसि' इति संबोध्यशिष्यस्यापि सदात्मकत्वं बोधयति । स्वपर्यन्तमैतदात्म्यानुभवे कृत्स्नप्रपञ्चस्य तदात्मकता अनुभवारूढा भवेत् । एतत्क्रमेणैव भगवान् धर्मराजः 'सकलमिदं

वासुदेवः' इत्युक्त्वानन्तरम् 'अहं च वासुदेवः' इत्याशङ्का-निरासकचशब्दपूर्वकमात्मनो वासुदेवात्मकत्वं वदति । नाहं मत्प्रकारो मन्निष्ठो मदात्मकः । अहमित्युक्ते मत्प्रकारं ब्रह्मेत्येव शास्त्रीयो बोधोऽनुभवश्च न्याय्यः । चिन्तितनिमिषित-सर्वचेष्टितानि तेनैव निर्वर्त्यन्त इति सदा भाव्यम् । 'यस्य नाहंकृतो भावः' इति गीतावचनमनुसृत्याहंकृतत्वबुद्धिं नि-रस्य ब्रह्मकृतत्वबुद्धिः परिचेया । यथानेककोट्यवयवविशिष्टै-कदेहिन एकत्वेनानुभवः सुलभः सहजश्च तथा विश्वदेहिन एकत्वानुभवं परिचिनुयाम । 'दृष्टिं ज्ञानमयीं कृत्वा पश्ये-द्ब्रह्ममयं जगत् । सा दृष्टिः परमोदारा न नासाग्रावलोकिनी ॥' इति श्रीशंकराचार्याः ॥

'ब्रह्मस्वभावो हि प्रपञ्चः, न प्रपञ्चस्वभावं ब्रह्म ।' प्र-पञ्चगतजाड्यपरिमितत्वदुःखरूपत्वादीनि न ब्रह्माणि । ब्रह्म-स्वभावभूतानुकूल्यानन्दत्वे प्रपञ्चस्य निजं वास्तवं रूपम् । तद्व्यक्तीकरणे सर्वस्याप्यानन्दमयत्वेनैकरस्यं भवेत् । तदर्थं सर्वदास्माभिर्विशिष्टैकब्रह्मानुभवोऽभ्यसनीयः । 'सर्वस्याप्या-नुकूल्यं स्वत इह जगतो वासुदेवात्मकस्य व्यक्तिं तन्मुक्ति-काले भजति' इत्याचार्याः । अवताराणां भूमिकात्वेन रूपणे रङ्गे तत्परिग्रह उचितः । श्रीरङ्गे दशावतारमूर्तीः पश्यामः ।

तदुच्यते 'निर्वर्तयन्भूमिकां रङ्गे धामनि' इति। नटस्य रङ्गं कुलधनं यथा तस्य नाट्यविद्या कुलविद्येति गणदासः। नटस्य रामस्य कुलधनं स्याद्रङ्गम्। अत एव 'रामादीनां कुलधनमिदं रङ्गतां याति रङ्गम्' इति॥

'हा हन्त हन्त भवतश्चरणारविन्दद्वन्द्वं कदा नु भविता विषयो ममाक्ष्णोः। योऽहं निरर्गलविनिर्गलदन्धकारैर्वृक्षैस्तृणैश्च सुलभं समयं व्यतीतः॥' इति श्रीवत्साङ्कमिश्राः कोसलजनपदस्य कृत्स्नतृणवृक्षपशुपक्षिमनुष्यादिप्राणिसामान्यमोक्षेण समयातीतत्वं शोचन्ति। कृष्णावतारे राससमये यमुनापुलिनसिकतभावालाभं च शोचन्ति। 'हा जन्म तासु सिकतासु मया न लब्धं रासे त्वया विरहिताः किल गोपकन्याः। यास्तावकीनपदपङ्क्तिजुषोऽजुषन्त निक्षिप्य तत्र निजमङ्गमनङ्गतप्तम्॥' इति। इन्दोः शीतरश्मित्वं विरहिजनेष्वयथार्थम्, यस्मादिन्दुस्तेषु हिमगर्भैर्मयूखैरग्निं विसृजतीत्युक्त्वानुपदमेव 'शक्यमरविन्दसुरभिः कणवाही मालिनीतरङ्गाणाम्। अङ्गैरनङ्गतप्तैरविरलमालिङ्गितुं पवनः॥' इति शैत्यसौरभ्यादियुक्तपवनस्यानङ्गतापशमनत्वमवर्णयन्महाकविः। 'पद्मसौगन्धिकवहं शिवं शोकविनाशनम्। धन्या लक्ष्मण सेवन्ते पम्पोपवनमारुतम्॥' इति श्लोकस्य शिवशोकविना-

शनशब्दयोः पञ्चतापादनेन दुःखनिवृत्तिः खल्वर्थः । वज्र-सारीकृतकुसुमशरविद्धानां कामाभितप्तानां पञ्चता सुखाय भवेत् । मूर्च्छावस्थाया उपकारकत्वं वर्ण्यते शोकव्यथितानाम् 'मोहेन संस्तम्भयतेन्द्रियाणाम् । अज्ञातभर्तृव्यसना मुहूर्तं कृतोपकारेव रतिर्बभूव ।' इति । मलयपवनादेः कामाग्निसंधुक्षकत्वं कविसमयसिद्धम् । मदनतापः शीतवातेन न शाम्येत् । अनेनैवाभिप्रायेण 'अङ्गमनङ्गतप्तम्' इति तुल्यं शब्दं प्रयुञ्जानाः 'न यमुनासलिलकणवाहिशीतलपवनेन गोपिका मदनतापशान्तिमीयुः । किं तु यमुनासिकतस्थासु कृष्णपदपङ्क्तिषु निजमङ्गं विन्यस्य तापशान्तिमीषुः' इत्यूचुः । यदुक्तं कविना 'द्वारेऽस्य पाण्डुसिकते पदपङ्क्तिर्दृश्यतेऽभिनवा ।' इति तस्मिन्प्रकरणे, तदपि स्वीकृतं श्रीवत्साङ्कमिश्रैः । यावान्बहुमानो दुष्यन्तस्य शकुन्तलापदपङ्क्तौ, तावांस्तदधिको व्यामोहो गोपिकानां कृष्णपदपङ्क्तिषु । इत्थं भिन्नकालत्वं शोचन्ति ते । श्रीवकुलभूषणा अतीतानवतारानुभवितुं तीव्रोत्कण्ठां प्रदर्शयन्ति वटतलशयितशिशुः सप्तलोकीं निगीर्येत्याद्यासु गाथासु । शिशुत्वादिविशिष्टं भगवन्तमनुबुभूषोर्वकुलभूषणस्य इन्दुं करस्थं काङ्क्षद्भिः शिशुभिस्तौल्यं संपद्यत इवेति चारु व्यञ्जयन्ति श्री-

मद्गुरवरमुनयो वकुलभूषणान्तादिगाथाशतके । 'ब्रह्मन्कालान्तरकृतं तत्कालीनं कथं भवेत् । यत्कौमारे हरिकृतं जगुः पौगण्डकेऽर्भकाः ।' इति परीक्षिता पृष्टः श्रीशुकोऽनन्तस्य भगवतः कालोपाध्यतीतत्वं सदा वर्तमानस्वभावत्वं साक्षादपरोक्षत्वं च स्मरंस्तदनुभवे मग्नो विसस्मार श्रोतारं परीक्षितं कथकमात्मानं च । कृच्छ्राच्छनैर्लब्धबहिर्दृशिः प्रत्याह । 'सतां ह्ययं सारभृतां निसर्गो यदर्थवाणीश्रुतिचेतसामपि । प्रतिक्षणं नव्यवदच्युतस्य स्त्रिया विटानामिव साधुवार्ता ॥' इति । स्त्रीचित्तानां स्त्रीमयानां विटानां प्रियस्त्रीविषयस्मरणवार्तादिना वृत्तानुभवोऽपि वर्तमान इव प्रतीयेत । तथा ब्रह्मचित्तानां ब्रह्ममयानां ब्रह्मविदां वृत्तान्यपि तदवताररूपाणि वर्तमानवदनुभूयेरन् । दूरस्थितकामिनीविषयपुरावृत्तस्य वर्तमानत्वानुभवो नियतं भ्रमात्मकः, तद्वृत्तान्तस्य वर्तमानत्वाभावात् । भगवतस्तु सदा वर्तमानत्वात्तदनुभवो नावश्यं भ्रान्तिः स्यात् । अवताररूपाणां भावनाजन्यसंस्काररूपेण शिल्पिना चिन्तनारूपचित्रभित्तौ आलेखनीयावतारप्रसादेन सम्यग्लेखनं सुशकमित्याचार्याः प्रदर्शयन्ति सङ्कल्पसूर्योदयसप्तमाङ्के । 'विदुषश्चिन्तनां शक्त्या चित्रभित्तिं वितन्वता । शुद्धाशुद्धविभागार्हं विश्वं विलिखितं मया ॥'

इति संस्कारः । 'परिचयमहिमानं प्राप्य सञ्जातभूमा दिवि-षदनुविधेयो दिव्यसंस्कारशिल्पी । व्यलिखदनघरूपं विश्व-मेतद्यथावच्चिरगतमपि दृश्यं चिन्तनाचित्रभित्तौ ॥' इति व्यवसायः संस्कारस्यालेखनकौशलमभिष्टौति । चिरगतस्या-प्यवतारस्य वर्तमानत्वप्रतीतिप्रकारो वर्ण्यतेऽनन्तरश्लोके तेन 'प्रमाणप्रत्ययादत्र कल्पितान्यविकल्पतः । अपि भूतानि भावीनि भवन्तीव भवन्ति नः ॥' इति । भावनयैव चित्तभित्तौ लि-ख्यन्तेऽवताररूपाणि । अतीतान्यवताररूपाण्यतीतविषयिण्या भावनया लिख्यन्ते । भविष्यत्कल्किरूपं त्वागामिविषयिण्या भावनयेति विशेषः । भगवदनुग्रहेण सन्तोषेण आन्तरभा-वनामात्रेण विरच्यते इदमवताररूपशिल्पम् । यथाह विवे-कः— 'नैतद्बाह्यैस्तूलिकावर्णकाद्यैः क्लृप्तं चित्रं किं तु सन्तोषलिप्तम् । नानाकारां भावनामेव शिल्पी शिल्पव्या-जान्नूनमव्योजगार ॥' इति। 'यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा वृणुते तनूं स्वाम्' इति श्रुतिमनुसृत्य भगवदवतार-तनुर्भगवदनुग्रहेणैव चिन्तायां लिख्येत । 'हृदि मुग्धशिख-ण्डमण्डनो लिखितः केन ममैष शिल्पिना ॥' इति प्रश्न-स्योत्तरं दीयते आचार्यैः सङ्कल्पसूर्योदये 'अखण्डब्रह्माण्ड प्रथमतरशिल्पी स भगवान्स्वयं पद्माजानिर्व्यलिखदिह चित्रं

स्वविषयम्' इति । एतत्स्तोत्रश्लोकाः प्रायेण तत्सप्तमाङ्के दृश्यन्ते । चेतःस्थितिमण्टपे संस्कारशिल्पिना लिखितानि भावनामयावतारशिल्पानि विवेकः सुमतिश्च पश्यतो व्यवसायेन सह । भावनया अस्माकं चित्तभित्तौ पुरावृत्तावतारूपान् लेखयितुं यथानुभवमुल्लेखनं क्रियते आचार्यैः । निर्वर्त्यमाना भूमिका भावनाभूमिकाः । 'भजसि मनसि नित्यं भूमिकां भावनाख्याम्' इत्याचार्याः पादुकां प्रत्यन्तिमपद्धतौ । किंचिदूनसहस्रश्लोकैर्मुहूर्तकालं निबिडं निपुणं भाविता पादुका भावुकाचार्यमनसि स्वभूमिकामातनोतीत्याचार्यानुभवः । तादृशोऽनुभवोऽस्माभिरपि संपाद्येत, यदि वयमाचार्यश्लोकान्प्रत्यहं जल्पन्तस्तदर्थं च भावयेम । स्वभावितानवतारानस्माननुभावयितुमेवाचार्यप्रयत्नः । 'शुभमातनोतु' इति प्रार्थना 'शुभविग्रहमस्माकमाविष्कारयतु' इत्यप्याभिप्रैति । कथमप्यक्षणमात्रेण ब्रह्मानन्दोऽस्मदानन्दो भवेत्? एकेनानुभूयमानस्य दर्शनेन कथं द्रष्टुस्तदानन्दः? ब्रह्मानन्दोऽन्यूनातिरिक्तं नित्यमुक्तैर्लभ्यत इति वयमभ्युपगच्छामः । जीवब्रह्मणोरानन्दस्य साम्ये तयोरप्यैक्यं नियतमित्याक्षिप्येत । शारीरकशास्त्रार्थदीपिकायां श्रीमद्रङ्गरामानुजमुनिर्निभरानन्दस्य स्वकीयत्वमनपेक्षितमिति वर्णयन्ति । रसस्य

स्वभावोऽयम्, यद्भावुकानामपि तुल्यरसतेति । रसरूपस्य भगवतो रसस्यापरोक्षणे तत्तुल्यो रसोऽनुभूयेत तदनुग्रहेण तत्प्रियतमैर्नित्यमुक्तैः ॥

यद्यत्पश्यामस्तत्र तत्र परमविशेष्यभूतं परमप्राणभूतं सत्-सत्यात्मादिशब्दैरुपनिषद्भिरुद्घोषितं ब्रह्म प्राधान्येन वयमध्यक्षयितुमर्हास्तत्तज्जडाजडं चाप्राधान्येन । बोधे विशेष्यत्वं ब्रह्मणः । जडसरं समाप्त्यान्ते 'वायुर्दोधूयते यद्यदयमुडुगणो बम्भ्रमीति द्रुतं खे तेजो जाज्वल्यते यद्यदपि जलनिधिर्मोधर्वी दोधवीति । भूर्यद्वा बोभवीति स्थिरचरमखिलं तच्च तादृक्च सर्वं स्वायत्ताशेषसत्तास्थितियमनपरब्रह्मलीलोर्मिचक्रम् ॥' इत्यद्भुतमुल्लिखितो जगद्विशिष्टब्रह्मानुभवो आचार्यैः । वेदान्ताचार्यो वृथा जडपदार्थस्वरूपं शोधयामास; नेदमध्यात्मशास्त्रमिति मा मथाः । अस्मद्दर्शनरीत्यानुभवे सर्वं जडम्, भगवतः सर्वाश्चर्यमयत्वमुपपाद्य तस्मिन्भक्तिं वर्धयेत् । तदर्थमेव भगवता भक्तियोगषट्के भूयो विभूतयः प्रादर्शिषत । 'गृह्यमाणे घटे यद्वन्मृत्तिका भाति वै बलात् । वीक्ष्यमाणे प्रपञ्चेऽपि ब्रह्मैवाभाति भासुरम् ॥' इति सद्विद्यायाः प्रयोजनं परिदृश्यमानसर्वजडाजडपदार्थस्य ब्रह्मप्रतीतिजनकत्वमिति सुन्दरं प्रदर्शयन्ति श्रीशंकराचार्याः । 'यथा एकेन

मृत्पिण्डेन सर्वं मृन्मयं विज्ञातं स्यात्' इत्युपक्रम्य 'ऐतदात्म्यमिदं सर्वम्' इत्युपसंहरतः पितुरेषोऽभिप्रायः । 'यथा मृन्मयपदार्थेषु मृदमेव पश्यसि, लोहमयपदार्थेषु लोहमेव पश्यसि, कार्ष्णायसपदार्थेषु कृष्णाय एव पश्यसि, तस्य तस्योपादानत्वात् । तथा सर्वस्मिन्मृन्मये लोहमये कार्ष्णायसे इतरत्र च ब्रह्म पश्य, तस्य सर्वोपादानत्वात्तदात्मकत्वात्सर्वस्य । स्वस्मिन्नपि ब्रह्म पश्य, तत्रापि तदात्मकत्वात् । यावत्स्वस्मिन्विशेषे नैतदात्म्यस्योपसंहारस्तावन्न तस्यानुभवारूढता । 'अखिलजगत्स्वामिन्नस्मत्स्वामिन्' इति गद्ये अखिलजगत्स्वामी स्यान्न स्वस्वामी, स्वस्वातन्त्र्यस्यानादिदृढवासनामूलत्वात् । उपादानभूतब्रह्मप्रतीतिः सर्वैः कार्यपदार्थैरुत्पाद्या । विशेष्यमात्रस्य विवर्ततयोपादानत्वमद्वैते । विशिष्टस्य विशेषणगतपरिणामद्वारोपादानत्वमस्मन्मते । यद्यपि विशिष्टदर्शनं वयं सर्वत्राभ्यस्यामः, तथापि न ब्रह्ममयत्वप्रतीतिहानिः, तस्यैव प्राधान्येन प्रचुरत्वात् । अप्रतीकदर्शनं चेदम् । प्रपञ्चस्य निष्प्रपञ्चीकरणमद्वैते । तस्यापि ब्रह्मप्रचुरतानुभवो विशिष्टाद्वैते । सर्वस्य ब्रह्मात्मकत्वरूपसत्येन शेपे प्रह्लादः 'यथा सर्वेषु भूतेषु सर्वव्यापी जगद्गुरुः । विष्णुरेव तथा सर्वे जीवन्त्वेते पुरोहिताः ॥' इति मृतपुरो-

हितान् जीवयिष्यन् । विशिष्टानुभवेऽपि विशेषणभूतस्य स्वस्य प्रपञ्चस्य च विस्मरणमपि प्रकाश्यते श्रीपराशरेण प्रह्लादानुभववर्णने ; 'एवं संचिन्तयन्विष्णुमभेदेनात्मनो द्विज । तन्मयत्वमवाप्याग्र्यं मेने चात्मानमच्युतम् ॥ विसस्मार तदात्मानं नान्यत्किंचिदजानत । अहमेवाव्ययो नित्यः परमात्मेत्यचिन्तयत् ॥' इति । समाधेर्व्युत्थितश्च 'दृष्ट्वापि स जगद्भूयो गगनाद्युपलक्षितम् । प्रह्लादोऽस्मीति सस्मार पुनरात्मानमात्मना ॥' इति प्रथमं प्रपञ्चमनन्तरमात्मानं च विशेषणतया सस्मार । पूर्णानुभवमग्नदशायां विशेषणस्य विस्मरणं गुणायैव भवेत् । ब्रह्माधीनसत्ताकस्य स्वस्य विस्मरणमात्रं नात्यन्तमसत्तेति वयम् । अनुभूयमानानन्तब्रह्मेतरस्यात्यन्तं बाधितत्वमित्यद्वैते । विशेषणानि न पृथक् सन्ति, न स्वातन्त्र्येण सन्ति । 'परमार्थस्त्वमेवैको नान्योऽस्ति जगतीतले' इति वयमप्यनुभवामः । 'प्रत्यक्षं चिदचिन्मयं जगदिदं यस्येत्यनुश्रूयते यश्चानन्यधियामनन्तविभवः प्रत्यक्षतामश्नुते । यश्चैको युगपत्सदा स्वत इदं विश्वं दरीदृश्यते प्राज्ञं तं प्रतिपन्नमोक्षणविधौ दक्षं दिदृक्षेमहि ॥' इति प्रत्यक्षपरिच्छेदान्ते आचार्या न्यायपरिशुद्धौ । सर्वत्र ब्रह्मापरोक्षणं प्रत्यक्षस्य परिशुद्धिरित्याचार्याणामाशयः । जडवस्तुमात्रदर्शनं भ्रमात्म-

कम् । 'ज्योतींषि विष्णुर्भुवनानि विष्णुः' इत्यादिना सर्वत्र ब्रह्मदर्शनमुपदिश्यते श्रीपराशरेण । 'यथाकाशस्थितो नित्यं वायुः सर्वत्रगो महान् । तथा सर्वाणि भूतानि मत्स्थानीत्युपधारय ॥' इति गीताश्लोकभाष्ये 'सर्वाणि भूतानि तैरदृष्टे मयि स्थितानि मयैव धृतानीत्युपधारय । यथाहुर्वेदविदः 'मेघोदयः सागरसन्निवृत्तिरिन्दोर्विभागः स्फुरितानि वायोः ॥ विद्युद्विभङ्गो गतिरुष्णरश्मेर्विष्णोर्विचित्राः प्रभवन्ति मायाः ।' इति विष्णोरनन्यसाधारणानि महाश्चर्याणीत्यर्थः । श्रुतिरपि 'एतस्य वा अक्षरस्य प्रशासनं गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठतः' 'भीषास्माद्वातः पवते । भीषोदेति सूर्यः । भीषास्मादग्निश्चेन्द्रश्च मृत्युर्धावति पञ्चमः ।' इत्यादिका इति भाषितम् । मेघोदयेत्यादिश्लोकः एवं व्याख्यातस्तात्पर्यचन्द्रिकायाम्— 'अस्मदाद्यगोचरोपादानोपकरणसंप्रदानादिकानां तत्क्षणादेव सकलदिङ्मुखव्यापिनां धाराधराणामुत्पत्तिः । सकलभुवनाप्लवनलम्पटस्यैव जलनिधेरम्बरालम्बिनां तरङ्गाणां वेलातले निवृत्तिः । प्रतिनियतकलावृद्धिक्षयशृङ्गोन्नमनादिरूपश्चन्द्रमसो विभागः । अशङ्कितागमानामनियतदिग्विशेषाणां तृणगिरितरुषण्डलुण्टाकानां चण्डमारुतादीनां विस्फूर्तयः, प्रशान्तदहनमिहिरमकरादिमह-

सि प्रावृषि निशीथेऽप्यविदितपूर्वोत्तरक्षणानां क्षणरुचीनां विभङ्गः। निरालम्बने विहायसि महीयसो मिहिरमण्डलस्य प्रतिनियतरजनिमासायनसंवत्सरादिदेशिकः सञ्चारः। एवंविधान्यन्यानि च परिवेषोपरागेन्द्रचापकरकास्तनिताशनिभूकम्पप्रभञ्जनभ्रमणादयोऽप्यद्भुतप्रकाराः सर्वे सर्वव्यापिनः सर्वशक्तेर्विष्णोरेव विचित्रसृष्टिशक्तिमूला भवितुमर्हन्तीति श्लोकार्थः' इति। सर्वाश्चर्यमयस्य भगवतोऽद्भुतमयत्वस्येदृशमद्भुतप्रदर्शनं कुत्र वा पश्येम। आर्षो योऽनुभवः स भाष्यकारैरन्वभावि। तदेवाचार्याः स्वयमनुभूयास्माननुभावयन्ति। शास्त्रेषु श्रुतं जगच्छरीरत्वमद्भुतमयत्वं च प्रत्यवतारं भगवता दृश्यं कृतं तदनुग्रहेण। वृत्तानामपि भावनाबलाद्भगवदनुग्रहेण चेदीनामप्यपरोक्षता भवेदित्यत्र प्रदर्श्यते आचार्यैरिति दर्शयिष्यते॥

**देवो नः शुभमातनोतु दशधा निर्वर्तयन्भूमिकां**
**रङ्गे धामनि लब्धनिर्भररसैरध्यक्षितो भावुकैः।**
**यद्भावेषु पृथग्विधेष्वनुगुणान्भावान्स्वयं बिभ्रती**
**यद्धर्मैरिह धर्मिणी विहरते नानाकृतिर्नायिका॥**

अव्यस्य दृश्यत्वापादनं नाटककृत्यम्। श्रवणविषयभूतौ दम्पती तदवतरणनाटकैर्दृश्यतामापाद्येते। अदृश्यावपि स्वा-

वतारैर्दृश्यौ भवतः । अतीतास्वप्यवतारदशासु तदनुग्रहसह-कृतयास्मद्भावनयाध्यक्ष्येते ॥

देवः । १. रङ्गस्य मध्येऽत्यूर्जिततेजोवद्दीपोऽवश्यं निवेशनीयो नटान् शोभयितुम्, रङ्गशालां च दीपयितुम् । निशि नाटकं नाट्येत । संसारनिशीमानि नाटकानि प्रवर्त्यन्ते । दीपापेक्षायां देवं विहाय कोऽन्यो दीपः प्रकाशेत तत्संनिधौ । सहस्ररश्मेरपि सन्तमसपर्व खलु भवति तन्निकटे । स्वयंप्रकाशः सो नान्यतः प्रकाश्यतामर्हति । 'न तद्भासयते सूर्यो न शशाङ्को न पावकः ।' तिष्ठतु भासकत्वम् । स्वयमेव न भासेरंस्तत्र । 'न तत्र सूर्यो भाति न चन्द्रतारकम्' तद्दूरे आत्मानं यदि भासयेयुस्तदपि तद्भासैव । 'तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति' निरतिशयदीप्तियुक्तो द्योतमानोऽनन्याधीनस्वप्रकाशो देवः स्वयं दीपो भवत्यात्मानं सभ्यान् रङ्गं च भासयितुम् । २. निष्कलस्य निष्क्रियस्य शान्तस्यास्य कथं नटनसंभवः । क्रीडनशीलत्वादयं नटो भवति । यद्यपि सर्वेश्वरोऽयं देवनलोलत्वान्नानाकारभूमिकाः परिगृह्य नटति । ३. अयं विश्वस्य सूत्रम् । अस्मिन्सर्वमिदं प्रोतं सूत्रे मणिगणा इव । लोकत्रयसूत्रधारोऽप्ययम् । सर्वानप्ययं सततं यन्त्रारूढानिव भ्राम-

यति, नर्तयति । सूत्रत्वेऽपि सूत्रधारत्वेऽप्ययं सततनटः । सर्गस्थितिप्रलयविभ्रमनाटिकासु शैलूषवद्विविधवेषपरिग्रहोयम् । ४. नायं सभ्येभ्यो ग्रहीता नटः । अयं तु दाता देवो नटः । ये स्वनाटकं पश्यन्ति तेषां सर्वस्वमात्मानमपि यच्छति । ५. अन्यः प्राकृतो नट आत्मानं प्रद्योतयेद्वर्णधारणादिना । अयं तु तेजसां राशिरूर्जितः । आत्मज्योतिषमावृणोति योगमायया ॥

नः शुभमातनोतु । १. शुभमिति शुभाश्रयविग्रहो गृह्येत, नामैकदेशे नामग्रहणम् । तेनैव खलु तद्विग्रहो लेखनीयोऽस्मद्धृदि । शुभविग्रहमस्मच्चक्षुर्गोचरतया विस्तारयतु । 'विस्तारयन् क्रीडसि योगमायाम्' इत्यवतारक्रीडावर्णनं ब्रह्मणा । योगमाया चाश्चर्यभूतशुभविग्रहः । 'तां देवमायामिव दिव्यरूपिणीम्' इति श्रीरुक्मिणीदिव्यमङ्गलविग्रहविषये । २. शुभमिति भगवद्विग्रहापरोक्ष्यजनितानन्दसन्दोहोऽपि सङ्गृहीतः स्यात् । अस्माकमानन्दं तनोतु, 'लक्ष्मीं तनोतु' इतिवत् । ३. उपक्रमस्थशुभमुपसंहारस्थशुभं स्यात् । एतत्स्तोत्रविवक्षणे 'दिशासु दशासु ख्यातिः शुभा जृम्भते' इति फलमुक्तम् । दशादिशासु जृम्भमाणा शुभा ख्यातिः शुभशब्देनाभिप्रेता स्यात् । यथावतारस्य ख्यातिः 'यशः कलिमलाप-

हम्' इति गीयते तथा तद्भावुकानां ख्यातिर्भूयात् । भावुकख्यातिरवतारख्यातौ पर्यवस्येत् । फलश्लोकोक्तं सर्वमत्र शुभत्वेन गृह्येत । ४. भूमिकां निर्वर्तयन्नः शुभमातनोतु इत्यन्वयः ॥

**दशधा ।** मध्यमणिन्यायेनोभयत्रान्वेति । दशधा शुभमातनोतु, 'कृतं दशगुणं मया' इतिवत् । शुभगुणनमस्य सहजम् । तदर्थमेवायमवतीर्णः । शुभविग्रहं दशधा विस्तारयतु । एकस्यास्मत्प्रपन्नवेषस्य फलत्वेन दश वेषान्प्रदर्शयति रूपकं नाटकेषु दीर्घतमम् । तच्च दशाङ्कम् । अवतारसंख्यापि रूपाकाङ्कसंख्यासमाना । ब्रह्मावतारसंख्या न न्यूनाङ्कसंख्यया भवेत् । एकमिदं नाटकं दशाङ्कम । दशधा भूमिकां निर्वर्तयन्नः शुभमातनोतु ॥

**निर्वर्तयन्भूमिकाम् ।** भूम्नोऽल्पभूमिकापरिग्रहस्य श्रमसाध्यत्वं पूर्वमुक्तम् । देहपरिमाणत्वमात्मनोऽभ्युपगच्छन्तो जैना अस्माभिः पर्यनुयुज्यन्ते हस्तिशरीरपरिमाणो जीवः पिपीलिकाजन्म प्राप्नुवन्न पिपीलिकाशरीरे संमीयेतेति ॥

**रङ्गे धामनि ।** रङ्गं धाम गृहम् । अन्येषां सूत्रधारा नटानां च रङ्गमन्यद्गृहमन्यत्स्यात् । अयं तु सदा नटनशी

लत्वाद्रङ्ग एव वसति । रङ्गं विना वेषपरिग्रहं विना न क्षणमपीमाववस्थातुं शक्नुयाताम् ॥ भक्तार्तिपरिजिहीर्षया भक्तमनोरथानुरोधेन सदा भूमिकापरिजिघृक्षुः सज्जस्तिष्ठति रङ्गे ॥

**लब्धनिर्भररसैर्भावुकैः** । १. रसस्य लब्धत्वमाश्चर्यावहम् 'आश्चर्योऽस्य लब्धा' इति कठश्रुतिर्ब्रह्मरसलाभस्यात्यन्तदुर्लभत्वं वदति । तच्छ्रुतिः प्रत्यभिज्ञाप्यते लब्धशब्देन । 'रसं ह्येवायं लब्ध्वानन्दी भवति' इति श्रुतिरपि सङ्गृह्यत इति पूर्वमुक्तम् । श्रवणमेव न लभ्येत बहुभिः । श्रवणेऽपि वेदनं दुर्लभम् । वेदनेऽपि प्राप्तिर्दुर्लभा । प्राप्तिश्च लाभशब्देनोच्यते । सा चानुभवगोचरतापत्तिः । तदेवोच्यते महाकविना 'सङ्क्रान्तिरन्यस्य विशेषयुक्ता' इति । सङ्क्रान्तिरुच्यते श्रुत्या 'एतमानन्दमयमात्मानमुपसङ्क्रम्य' इति । आनन्दवल्ल्युक्तवाङ्मनसागोचरानन्दो निर्भररस इत्युच्यते । निर्भररसः पूर्णरसः । पूर्णं ब्रह्म । रसो ब्रह्म । तद्विषयः पूर्णरस उचितः । स च नास्मत्प्रयत्नेन संपादयितुं शक्यः । नैर्भर्यरूपप्रपन्नत्वसंपादने संपूर्णो रसोऽनायासेन लभ्येत । नैर्भर्यलभ्यरसो निर्भरः पूर्णः स्यादिति चारु व्यज्यते निर्भरशब्दग्रहणेन । २. 'यो वै भूमा तत्सुखं नाल्पे सुखमस्ति

इति भूमविद्या अल्पे रसजनकत्वं निषेधति । इयं भूम्नो भूमिका यद्यपि भूमापेक्षयाल्पा, अस्यां पूर्णसुखमित्यघटितघटकत्वं व्यज्यते । ३. 'नटवद्भूमिकाभेदैर्नाथ दीव्यन् पृथग्विधैः । पुंसामनन्यभावानां पुष्णासि रसमद्भुतम् ॥' इति श्लोकः पूर्वमेवोदाहृतः ॥

अध्यक्षितः । १. अधोक्षजोऽदृश्योऽध्यक्ष्यते भूमिकापरिग्रहेण । २. भगवान्नटश्चेत्कः सभाध्यक्षः । सभ्याः परकालादयस्तद्भक्तास्तं विना कमन्यं सभाध्यक्षं कुर्युः । अयं नट एव सभ्यैर्भावुकैरध्यक्षत्वेन स्थाप्यत इत्यपि चारु व्यज्यते । ३. सभ्यानेवायमध्यक्षान्मनुते । भावुकैरध्यक्षवदाचर्यते भगवद्भुद्ध्येत्यपि व्यज्यते । अध्यक्षणीयावतारसंख्या दश, अध्यक्षकाभिनवदशावतारभूतभावुकसंख्यापि दश । ४. ब्रह्मरसस्य साक्षात्करणेनैव तद्रसोऽस्मान्सङ्क्रामति । एकस्य रसः कथमन्यस्याध्यक्षयितुः स्यादिति चेद्रसस्य स्वभावोऽयम्, यदेकत्रोत्पन्नमन्यान्द्रष्टॄन् सङ्क्रमेदित्येतदपि व्यज्यतेऽध्यक्षितो भावुकैरिति ॥

यद्भावेषु पृथग्विधेष्वनुगुणान्भावान्स्वयं बिभ्रती ।
पुमान् देवः शैलूषो भवेत् । स्त्रीवेषः प्रायेण पुंनटैः परिगृ-

ह्यते । न नटस्य पत्नी नटीवेषं परिगृह्णाति । असूर्यंपश्या शुद्धान्तस्त्री देव्यपि शैलूषी भवति । तस्या विभुत्वेऽप्यस्ति जगन्मोहिनी माया यवनिका, येन सा तिरोधीयत इति व्यञ्जयन्ति श्रीयामुनाचार्याः । वेषं परिगृह्य बहिरागमने सा दृश्येत सर्वैरपि जनैः । न केवलमुत्कृष्टदेवमनुष्यादियोनिष्व-वतरति । पृथग्विधेषु निहीनयोनिष्वप्यवतरति नायकेन सह तच्छायाभूता । 'यस्तेन सह स स्वर्गो निरयो यश्च तं विना' इति खलु स्वर्गनरकव्यवस्था तस्याः । पृथक्छब्दो नानार्थको निहीनार्थकश्च । भावशब्दो जन्मपरोऽभिनेयहार्दभावपरश्च । नटनप्रकरणे भावशब्दस्य तदर्थ आवश्यकः । स्वयमिति छायावद्भर्त्रनुगमनाय नियोगनिर्बन्धाभावो द्योत्यते । न छाया अनुगमने नियुज्येत । नापि ततो निवार्येत । विधिनिषेधा-नर्हा तद्वतीतेयं छाया । सजीवेयं छाया । 'छायाः सजीवा इव धर्मदाराः' इत्याचार्याः ॥

यद्धर्मैरिह धर्मिणी । 'यथा सर्वगतो विष्णुस्तथा चेयं द्विजोत्तम' इति पराशरवचनं स्मार्यते ॥

विहरते । स्वसन्तोषार्थमेव भूमिकाः परिगृह्णातीत्यात्म-नेपदेन व्यज्यते ॥

**नानाकृतिर्नायिका** । १. नानाकारवती । २. नानाविधकृतिमती । कृतिषु नायकमप्यतिशेते नायिका । 'लघुतरा रामस्य गोष्ठी कृता' इत्यादिकमत्र भाव्यम् । पृथग्विधेष्वनुगुणान्भावान्बिभ्रतीत्येव नानाकारपरिग्रह उपपादितः । अत्र नानाकृतित्वेन नायकादपि विविधाधिककृतिमत्त्ववर्णनं स्वरसं स्यादिति रसिकैर्भाव्यम् ॥

**निर्मग्नश्रुतिजालमार्गणदशादत्तक्षणैर्वीक्षणै-**
**रन्तस्तन्वदिवारविन्दगहनान्यौदन्वतीनामपाम् ।**
**निष्प्रत्यूहतरङ्गरिङ्खणमिथः प्रत्यूढपाथश्छटा-**
**डोलारोहसदोहलं भगवतो मात्स्यं वपुः पातु नः ॥**

अतिबृहद्भगवतो मात्स्यं वपुर्मकरालयं कृत्स्नं क्षोभयति । तिमिङ्गिलः, तिमिङ्गिलगिलः, तद्गिलस्तद्गिल इति गिलपरंपरा पठ्यते । विश्वनिगरणशीलोऽयं महागिलः । भगवदर्चाप्रतिमाया डोलोत्सवं वयं चिकीर्षामः । तदर्थं वयं डोलां निर्मिमीमहे । अतिबृहतो मात्स्यवपुषः के वा डोलां रचयितुं प्रभवेयुः । कुतो वा तदर्थंदावायसशृङ्खलादीनि संपाद्येरन् । डोलोत्सवं च दिदृक्षन्ति भक्ताः । 'किंस्विद्वनं क उ स वृक्ष आसीद्यतो द्यावापृथिवी निष्टतक्षुः' इति पृच्छती श्रुतिः

'ब्रह्म वनं ब्रह्म स वृक्ष आसीद्यतो द्यावापृथिवी निष्टतक्षत्' इत्युत्तरयति । भक्तच्छन्दानुवर्ती भगवान् स्वयं डोलारोहोत्सवं निर्वर्तयति । अस्मद्दोहदमनु तस्य दोहदो जायते । का डोला भवेदस्य महतो भूतस्य । मात्स्यं वपुर्द्वीप इव भवति । स्ववपुषा मकरालयं संक्षोभ्यात्युच्चदीर्घांस्तरङ्गानुत्पादयति । ते च तरङ्गा यद्यप्यन्यतो निष्प्रत्यूहा मिथः प्रत्यूढा भवन्ति डोलासंपादनाय । उत्सवडोला पद्मैरलंकृता स्यात् । कुतोऽस्याः समुद्रतरङ्गडोलायाः पद्मानि संपाद्येरन् । अन्तःसमुद्रे कथं तेषां संभवसंभवः । का गतिः । तत्कटाक्षा एव गतिः । तान्यपि विरच्यन्ते भगवत्कटाक्षैः । पुण्डरीकाक्षस्य वीक्षणैः पद्मवनानि सृज्यन्तेऽन्तःसमुद्रे लवणमयीष्वप्सु । भगवद्वपुरेव डोलोत्सवसामग्रीं कृत्स्नां स्वयं संपादयति । मीनस्याक्षीण्युपमानत्वेन प्रसिद्धानि । यदि पुण्डरीकाक्षो मीनो भवेत्तद्वीक्षणैर्विचित्रपद्मवनसृष्टौ कः संशयीत । मत्स्यावतारस्यातिबृहत्त्वं प्रपन्नजनानन्दसन्दोहप्रथनं च चारु वर्ण्यतेऽत्र रसिकमनोहारितया । मत्स्यावतारो श्रीमद्धयवदनावताराभिन्नः । 'मत्स्याश्वकच्छपवराह—' इति श्रीभागवते मत्स्याश्वयोरेकीकृत्य सहपठनम् । श्रीहयग्रीवं नमश्चक्रे सङ्कल्पसूर्योदयप्रथमाङ्के नाटकमारिप्समानः 'तदहम-

शेषविद्यासंपदुपलम्भनीमभूतपूर्वबहुविधभूमिकापरिग्रहेऽप्य-तिरस्कृतपारम्यामनवबोधजलधिकुक्षिंभरीमनन्यभक्त्युन्मीलितामादिमां देवतामभ्युपगच्छामि' इति । अत्र भगवदनेकनाटकवर्णनप्रकरणे तन्नमस्क्रियया वतारवर्णनोपक्रमः स्वादुतमः कवीनाम् । 'एतस्मिन्नन्तरे राजन् देवो हयशिरोधरः । जग्राह वेदानखिलान् रसातलगतान् हरिः । प्रादाच्च ब्रह्मणे राजन् ततः स्वां प्रकृतिं ययौ ॥' इति स्तोत्रभाष्योदाहृतभगवच्छास्त्रवचनान्यत्र भाव्यानि । मधुकैटभाविति मूर्तरजस्तमसी ज्ञानमयान्वेदानपजह्रतुः । रजस्तमसी निरस्य सत्त्वमयवेदसंप्रदायप्रवर्तको मधुसूदनः । ज्ञानसंप्रदायप्रवर्तकत्वाद्गीताचार्यस्तन्नाम्ना भूयो निर्दिश्यते संबोध्यते गीताशास्त्र इति भाव्यम् । नष्टं योगं पुनः प्रवर्तयति गीतया । तथा चोक्तं स्वेनैव 'स कालेनेह महता योगो नष्टः परंतप । स एवायं मया तेऽद्य योगः प्रोक्तः पुरातनः ॥' शास्त्रारम्भे 'उवाच मधुसूदनः' इति । 'योऽयं योगस्त्वया प्रोक्तः साम्येन मधुसूदन' इत्याचार्यसंबोधनं शिष्येण । मधुसूदनश्च विद्यामूर्तिः श्रीहयवदनः । लक्ष्मीहयग्रीवपरब्रह्मणे नम इति प्रथममङ्गलपाठः सर्वेषु द्वैतग्रन्थेषु ॥

निर्मग्नश्रुतिजालमार्गणदशादत्तक्षणैर्वीक्षणैः । १. म-

त्थं वर्णयंस्तद्वीक्षणैर्जितो भवत्याचार्य । अन्तर्जले मत्स्याक्षीणामेव प्रसरसंभवः । २. क्षणशब्दोऽवधानार्थकः, उत्सवार्थकश्च । मार्गणावधानव्याजेनास्माकमुत्सवप्रदैः मार्गणदशायां दत्तोत्सवैः । ३. श्रुतयः सर्वा अपि निःशेषं मग्नाः । श्रुतयः पुत्रस्य ब्रह्मणः, प्रजानां सर्वलोकानां च चक्षूंषि । 'वेदा मे परमं चक्षुः' इति रुरोद ब्रह्म । प्रजाचक्षूंषि वेदाः भगवद्वीक्षणैरन्विष्यन्ते । ४. ननु कथमयं सर्वज्ञमत्स्यः जालमन्विष्यतीत्युच्यते । भ्रान्ता मूढा मत्स्या बडिशभक्षणाय जालसमीपं गच्छन्ति, बद्ध्यन्ते म्रियन्ते चेति चेत्— अयं परमकारुणिको मत्स्यः श्रुतिजालं मार्गते, तेन बद्धो भूत्वा जनश्रवणेषु प्रविश्य तद्द्वारा तानुज्जीवयितुं च । एतद्ध्वनयति श्रुतिजालमार्गणेत्युक्तिः । ५. श्रवणस्य जले मग्नतायां निःशब्दतानुभवः सहजः । लोकश्रवणभूतश्रुतौ जले निर्मग्ने सशब्दता निवृत्ता भवति । ६. शब्दराशेरन्तर्जले मज्जने तस्यात्यन्तं मृग्यता स्यात् । तद्द्योत्यत इव निर्मग्नशब्देन । ७. 'मत्कुणाविव पुरा परिप्लवौ सिन्धुनाथशयने निषेदुषः । गच्छतः स्म मधुकैटभौ विभोर्यस्य नैद्रसुखविघ्नतां क्षणम् ॥' इति माघे क्षणशब्दप्रयोगो मात्स्यवपुर्वर्णने । तस्य क्षणशब्दस्यात्र विचित्रः प्रयोगः प्रदर्श्यते ॥

**अन्तस्तन्वदिवारविन्दगहनान्यौदन्वतीनामपाम्।** अन्तर्जले पद्मवनानि सृज्यन्ते डोलामलंकर्तुम् । लवणाम्भसि पद्मान्यन्तः सृज्यन्ते । तन्वच्छब्देन 'शुभमातनोतु' इति पूर्वश्लोकप्रार्थितं तत्क्षणमेव करुणामयेनान्वर्थीक्रियत इति व्यज्यते। शुभं डोलोत्सवं पद्मैस्तदलंकरणादिकं च तन्वदिव। काङ्क्षितशुभं तन्यते ॥

**निष्प्रत्यूहतरङ्गरिङ्गणमिथः प्रत्यूढपाथश्छटाडोलारोहसदोहलम्।** तरङ्गाः सहजाः समुद्रस्य भगवद्रूपमहामत्स्यविहारजनितहर्षेण भूयानानन्दक्षोभो भवति । निरतिशयबृहन्मत्स्यशरीरक्षोभजनिता यद्यपि तरङ्गा नेतरेण प्रत्यूह्येरंस्ते इतरेतरं मिथः प्रत्यूढा डोलां निर्वर्तयन्ति । समुद्रे वेगं यान्तो बृहन्तो धूमनावः सततं डोलायन्त इत्यनुभवसिद्धम् । तच्च डोलायितत्वं तरङ्गरिङ्गणमिथःप्रत्यूढपाथश्छटाभिः । एष एवानुभवः आचार्यैः सम्यक्प्रदर्श्यत इति रसिकैर्विभाव्यम् ॥

**मात्स्यं वपुः पातु नः ।** डोलारोहोत्सवे वयमिमं मङ्गलश्लोकं गायामः । विभववपुःप्रदर्शनं विचित्रडोलारोहोत्सवप्रदर्शनं चास्मत्परित्राणम् । तद्विवक्ष्यते 'पातु' इति ।

वीक्षणैः पातु नः । वीक्षणैः स्वप्रजाः संवर्धयन्ति मत्स्या इति प्रसिद्धम् । 'ईक्षणध्यानसंस्पर्शप्रमुखैः पोषयन्प्रजाः । मत्स्यकूर्मविहङ्गादिविग्रहः प्रेक्ष्यते प्रभुः ।' इति सङ्कल्पसूर्योदये । मात्स्यं वपुरिदानीमपि मनुराराधयतीति भागवते ॥

अव्यासुर्भुवनत्रयीमनिभृतं कण्डूयनैरद्रिणा
निद्राणस्य परस्य कूर्मवपुषो निश्वासवातोर्मयः ।
यद्विक्षेपणसंस्कृतोदधिपयः प्रेङ्खोलपर्यङ्किका-
नित्यारोहणनिर्वृतो विहरते देवः सहैव श्रिया ॥३॥

कूर्मवपुषो बृहत्त्वाधारत्वामृतहेतुत्वादिवर्णनम् । स्वपृष्ठे मन्थाचल आरोपितः । स चातिवेगं बम्भ्रम्यते त्रयस्त्रिंशत्कोटिदेवैरसंख्यैरसुरैश्च इतस्तत आकृष्टोऽब्धिमथनाय । सहजशत्रवः सुरासुराः स्पर्धमाना अधिकमधिकं बलमुपयुञ्जते कर्षणे । मथनेनातिक्षुब्धः सिन्धुः । तुमुलः शब्दः । 'दधार पृष्ठेन स लक्षयोजनप्रसारिणा द्वीप इवापरो महान्' इति कमठपृष्ठस्यातिबृहत्त्वम् । मन्थभूतस्याद्रेः स्वपृष्ठे भ्रमणं पामकण्डूयनरूपसुखाय भवत्यस्याप्रमेयस्य । अनन्तरं तज्जनितसुखेनानघां निद्रामावहति । एतद्विचित्रं प्रदर्श्यते सङ्कल्पसूर्योदये 'कचिद्ग्राहाधीशः कचिदमरदन्तावलपतिः कचि-

त्प्रालेयांशुः क्वचिदमृतविष्फूर्जितमिति। अतिक्षोभे सिन्धो-रयमनघनिद्रो धृतगिरिर्विषादं देवानां विघटयति वैकुण्ठक-मठः॥' इति। नष्टद्रव्यरूपोच्चैःश्रवसैरावतकल्पवृक्षादिलाभे तुमुलः शब्दो देवगणानां भवेत्। अब्धिरत्यन्तं क्षुभितः। धृतगिरिरयं वैकुण्ठकमठोऽनघं निद्राति। अयं कमठो सर्व-प्रकारैरकुण्ठो वैकुण्ठो ब्रह्मकमठ इति को वा विप्रतिपद्येत। यद्यप्ययमसुरान्वञ्चयति मोहनावतारेण, न तेषां हननमस्मिन्न-वतारे। ईदृशविचित्राघटितघटको भगवानेकमेव विघटयति। किं तदिति चेत् 'विषादं देवानां विघटयति।'

**अव्यासुः**। पूर्वं मात्स्यवपुषः प्रार्थनम्। अत्र निद्राण-कूर्मदीर्घनिश्वासाः प्रार्थ्यन्ते। निश्वासैरस्मत्प्राणनं सुलभं खलु। प्राणनैः प्राणनं सुकरम्। प्राणभूतः परमात्मा प्राणान् जीवान् जीवयति। 'प्राणा वै सत्यं तेषामेष सत्यम्॥'

**भुवनत्रयीम्**। पूर्वावतारेण वेदरूपत्रयी रक्षिता। अने-नापरा त्रयी त्रिभुवनरूपा रक्ष्यत इति व्यज्यते। 'वेदः' 'लोकः' इति भेदो व्यवहारसिद्धः॥

**अनिभृतं कण्डूयनैरद्रिणा**। 'बिभ्रत्तदावर्तनमादिक-च्छपो मेनेऽङ्गकण्डूयनमप्रमेयः' इति शुकानुभवः प्रत्यभि-

ज्ञाप्यते । अनेनाप्रमेयत्वरूपबृहत्त्वं व्यज्यते ॥

**निद्राणस्य परस्य कूर्मवपुषः** । न केवलं कण्डूत्यपनायकत्वमद्र्यावर्तनस्य । निद्राहेतुत्वमपि ॥

**निश्वासवातोर्मयः** । १. पूर्वमपहृतवेदोद्धारः । इदानीं स्वनिश्वसितैर्वेदनिश्चारणम् । २. अस्य महतो भूतस्य निश्वसितमित्यादिश्रुतिः कूर्मविषयिणीव । महान् भूतः कूर्मः स्यात् । विष्णुरिदं महद्भूतम् । ३. महान्क्षोभः समुद्रस्यैतन्निश्वासवातजनिततरङ्गैः । न तथा क्षोभोऽद्रिणा मथनेन । ४. कूर्मनिश्वसितभूता वेदा भुवनत्रयमवन्ति धर्मोपदेशेन । धर्मेण लोको ध्रियेत ॥

**यद्विक्षेपणसंस्कृतोदधिपयः प्रेङ्खोलपर्यङ्किकानित्यारोहणनिर्वृतः** । १. पूर्वं मथनेनाप्यसंस्कृत उदधिः । प्राकृतः पूर्वम् । इदानीं वेदरूपनिश्वसितरचितोर्मिविक्षिप्तः संस्कृतो भवतीति व्यज्यते । निश्वसितोर्मिविक्षेपणैः संस्क्रियते उदधिः । वेदवाततरङ्गैः स संस्कृतीक्रियत इव । २. डोलारूढा पूर्वश्लोके । इदानीमान्दोलितपर्यङ्कारोहो योगनिद्रासौकर्याय । ३. वेदमन्त्रभूतः संस्कृतः पर्यङ्क उचितो धर्मसंस्थापनार्थमवतीर्णयोः सनातनधर्मस्वरूपदम्पत्योः । श्रुतयः शय्या भव-

न्तीति प्रसिद्धम् । 'तल्पं कल्पान्तयूनः ।' अत्र श्रुतिरूपनिश्वसितसंस्कृतमयः पर्यङ्कीभवति । ४. प्रेङ्खोलपर्यङ्किका सद्यः प्रादुर्भूतया नववध्वा श्रिया सह शयनायातीव भोग्या स्यात् । चन्द्रस्तदानीमेवोत्पन्नः । अमृतं च नवं प्रभूतम् । चिरविरहिता नवा वधूर्वक्षस्थलमारूढा पश्यतां सर्वदेवानाम् । तया सह नित्यमेव कूर्मत्वेन पर्यङ्किकामारुह्य निर्वृणोति । आरूढया सह देव्या पर्यङ्कारोहः । ५. यथा वक्षःस्थलारोहो नित्यस्तथा तया सह पर्यङ्कारोहोऽपि नित्यः । कूर्मावतारस्यावतारान्तरत्ववत्कालावच्छेदो मास्तु । श्वशुरगृहे क्षीराब्धावेवायमवतारः । नवां रक्तां वधूं प्रेङ्खोलपर्यङ्किकां च लब्ध्वा नित्यारोहमेव काङ्क्षतीति नित्यशब्देन व्यज्यते । पर्यङ्कोऽतिस्वच्छश्वेतपटैराव्रियेत । पयःपर्यङ्के तत्साम्यं सुलभम् । ६. डोलासेवा वृत्ता । इदानीं पर्यङ्कसेवा लभ्यते भक्तजनैः ॥

**सहैव श्रिया** । यदर्थमम्भोधिरमन्थि तां श्रियमसितेक्षणां विना क्षणमपि न जीवेत् । कूर्मवपुरिति नोद्विजते सा । तत्रिं नित्यं कामयते । तद्वपुश्च तस्या नित्यं रोचते । वेदप्राप्त्यनन्तरं स्थितप्रज्ञो वेदार्थं ध्यायेत् पुरुषः । 'यदा संहरते चायं कूर्मोऽङ्गानीव सर्वशः ।' इति कूर्मसादृश्यं प्रत्याहरणव्यापृतस्य ध्यातुः ॥

गोपायेदनिशं जगन्ति कुहनापोत्री पवित्रीकृत-
ब्रह्माण्डः प्रलयोर्मिघोषगुरुभिर्घोणारवैर्घुर्घुरैः ।
यद्दंष्ट्राङ्कुरकोटिगाढघटनानिष्कम्पनित्यस्थिति-
र्ब्रह्मस्तम्बमसौदसौ भगवती मुस्तेव विश्वंभरा ॥

नष्टा श्रीर्लब्धा कूर्मवपुषा । नष्टा भूमिर्लभ्यते वराहवपुषा । तस्यां भूयान्बहुमानो भगवतः । वक्षःस्थलेन वरुणालयराजकन्यां संभावयति । भूमिं तु शेषात्मना सहस्रैः शिरोभिर्दधति । तद्भारापनयनाय भूयोऽवतरति श्रिया सह । 'अप्यङ्घ्रिसंभव उरुक्रमविक्रमाद्वा आहो वराहवपुषः परिरम्भणेन' इत्युक्तरीत्या नष्टां भूदेवीमानीय परिरब्धुं वराहवपुःपरिग्रहो युक्तः । अस्य वराहस्य निरतिशयबृहत्त्वं श्रीभागवते स्फुटं वर्ण्यते । 'यस्यायुतशतैकांशे विश्वशक्तिरियं स्थिता' इतिवद्विश्वस्य भगवद्दंष्ट्राङ्कुरकोटिलग्नत्वप्रदर्शनेन समस्तजगतः शरीरत्वरूपाधेयत्वं प्रदर्श्यते । भगवतो निरतिशयबृहत्त्वं विचित्रं व्यज्यते । अस्य वराहस्य घोणारवाः प्रलयोर्मिघोषमभिभवन्ति । अस्य दंष्ट्राया अङ्कुरस्य कोटौ लग्ना विश्वंभरा । तेन गाढघटिता, अतः परमकम्पनीयां नित्यां स्थितिं लभते । निष्कम्पत्वं निदर्श्यते चतुर्थेन पादेन । तथा निश्चलां स्थितिं लभते; यथा सा आब्रह्मस्तम्बपर्यन्तं कृत्स्नचेतना-

चेतनान् सुखं सूते । अन्तर्वत्न्यः स्त्रियो आसन्नप्रसवा न कम्पचलनादिकं सहेरन्निति प्रसिद्धम् । दंष्ट्राङ्कुरकोटिलग्नेयं कोटिसहस्रप्रजाः सूते । यथा मुस्ता तद्दंष्ट्राङ्कुरे लग्ना दृश्येत, तथा विश्वंभरा तत्र दृश्यते । किमु वाच्यं तस्य निरतिशयबृहत्त्वे । तस्य विश्वशरीरत्वं सम्यगभ्यधक्ष्यते । तत्तद्योनिस्वभावोऽप्यहेयो भगवता तत्र तत्रावतीर्णेन । वराहा नागासधमुद्रादौ विहरेयुः । पल्वलादौ पङ्किलजले खुरदघ्ने जानुदघ्ने वा विहरणं तेषां स्वभावः । 'विस्रब्धं क्रियतां वराहततिभिर्मुस्ताक्षतिः पल्वले' इति कविसार्वभौमः । अत्रोच्यते । अयं ब्रह्मवराहः । अस्य खुरदघ्न एव जले अयं विहरति । महोदधिरस्य खुरदघ्न इति प्रदर्श्यते आचार्यैः । 'क्वापि कल्पान्तवेशन्ते खुरदघ्ने समुद्धृताम् । वहते मेदिनीमुस्तां महते पोत्रिणे नमः ॥' इति सङ्कल्पसूर्योदये ॥

गोपायेदनिशं जगन्ति । नावतारकालिकरक्षणमात्राच्तृप्यामः । अनिशं रक्ष्येमानेन ब्रह्मवराहेण । 'हरेर्धृतक्रोडतनोः स्वमायया' इति श्रीभागवते । देवीमात्ररक्षणेन न सन्तुष्यामः । एतद्रूपप्रदर्शनेन सर्वाणि जगन्ति रक्ष्यात् ॥

कुहनापोत्रीपवित्रीकृतब्रह्माण्डः । 'अस्नाविरं शुद्धमपापविद्धम्' इति वर्णितस्य जगत्पवित्रभूतस्य यज्ञमूर्तेः कथं वराहत्वेनावतारः । अयं मिथ्यापोत्री । न वास्तवपोत्री । पवित्रतमोऽयं कोलः । अनेन जगन्ति पवित्रीक्रियन्ते । पूर्वमपवित्रो लोक इदानीं पवित्रीभवति । पवित्राणां पवित्रोऽयं वराहः । 'त्रयीमयं रूपमिदं च सौकरम्' 'बिभ्रन्वता वेदमयं निजं वपुः' 'यज्ञावयवस्य मायागृहीतवाराहतनोर्महात्मनः' 'क्रोडापदेशः स्वयमध्वराङ्गः' 'यद्रोमगर्तेषु निलिल्युरध्वराः' इति वेदमयो यज्ञमयोऽयम् । 'सर्ववेदमयो हरिः' 'सर्वयज्ञमयो हरिः' 'यज्ञो वै विष्णुः' इत्यादिवचनान्यस्मिन्मुख्यानि । एतत्कथाश्रवणादिफलमेवं समकीर्त्यत श्रीशुकेन 'शृणोति गायत्यनुमोदतेऽञ्जसा विमुच्यते ब्रह्मवधादपि द्विजाः । एतन्महापुण्यमलं पवित्रं० पदमायुराशिषाम् ॥' इति । वराहावतारकाले तद्घुर्घुरितं श्रुत्वा 'जनस्तपःसत्यनिवासिनस्ते त्रिभिः पवित्रैर्मुनयोऽगृणन्स्म' इति त्रिलोकस्था मुनयः पवित्रम्, पवित्रम्, पवित्रमिति त्रिरपठन्, शान्तिपठनवत् । इदं सर्वं प्रत्यभिज्ञाप्यते पवित्रशब्देन ॥

प्रलयोर्मिघोषगुरुभिर्घोणारवैर्घुर्घुरैः । सागरान्तं खलु

हिरण्यकेशहिरण्याक्षयोरायोधनम् । हिरण्यकेश इति भगवन्तं निर्दिशन् श्रीशुको हिरण्याक्षस्य 'आ प्रणखात्सर्व एव सुवर्णो हिरण्यकेशः' सदृशोऽधिकश्च शत्रुश्चेति चारु व्यञ्जयति । अक्षिमात्रं हिरण्यं तस्यासुरस्य । प्रलयोर्मिघोषो नियतः सागरे तयोस्तदन्तर्युद्धक्षोभसंरम्भसमये । तद्घोषादपि गरीयानस्य घोणारवः । प्रथमगुरोर्वेदमयस्यादिवराहस्य घोणारवस्य गुरुत्वं न्याय्यमिति गुरुशब्देन व्यज्यते । 'विद्यागुरवे नमो नमः' इति श्रीशुकः । मत्स्यावतारेण लब्धस्य कूर्मेण योगेनाशैथिल्येनाभ्यस्तस्य वेदस्येदानीं वराहेणोच्चैर्ब्रह्माण्डव्यापिभिर्घोणारवैरुद्घोषणम्, तेन च ब्रह्माण्डपवित्रीकरणमित्यवधेयम् । असुरापहारेणापवित्रीकृताया भुवो वेदमन्त्रानुपाठैः शुद्धिरूपसंस्कारः संपाद्यते । यथा मत्स्यस्य वीक्षणं सततधावनादिकमान्दोलनं च, यथा च कूर्मस्य निद्रानिश्वासादिकमङ्गसंहरणादिरूपव्यापारेण प्रत्याहाररूपयोगसाम्यं चावर्ण्यन्त, तथा वराहस्य स्वभावभूतघोणारवा वर्ण्यन्ते । यथावतीर्णेन ब्रह्मणा ब्रह्मस्वभावो न जह्यते, तथावतीर्णतत्तद्योनिस्वभावोऽपि न त्यज्यते । घोणैव मुख्यं बलं वराहस्य । 'स्थूलनासिकापूर्वसुन्दराम्' इति माघे । वनमृग इत्युपहसितो भगवान् 'सत्यं वयं भो वनगोचरा युष्मद्विधान्मृगया-

मो ग्रामसिद्धान्' इति प्रतिवक्ति । घोणया घ्राणेनापहृतभुवो मार्गणं कारणसूकरस्य सुकरमभूत् । यथा वीक्षणैर्मार्गणं निर्मग्नस्य श्रुतिजालस्य, तथा घोणाया आघ्राणैर्मार्गणं निर्मग्ना या भुवः । 'निशम्यते घुर्घुरितम्' इति श्रीशुकानुभवः प्रत्यभिज्ञाप्यते घुर्घुरशब्देन । शुकानुभवानुकरणं वराहरूपभगवद्घोणारवानुकरणं च संपाद्यत एतच्छब्देनेति सहृदयैर्भाव्यम् । भगवत्कृतवेदघोषानूच्चारणरूपाध्ययनसंपादनेन तत एव साक्षादध्ययनसंप्रदायः संपादितः स्यात् । गुरुकुलवासरूपश्रमविलम्बाक्षमाणामियं काचिद्गतिरध्ययनप्रापणे ॥

यद्दंष्ट्राङ्कुरकोटिगाढघटनानिष्कम्पनित्यस्थितिः । 'दंष्ट्राग्रकोट्या भगवंस्त्वया धृता विराजते भूधरभूः सभूधरः' 'स्वदंष्ट्रयोद्धृत्य महीं निमग्नाम्' 'भूमण्डलेनास्य दता धृतेन ते' 'तस्य चोद्धरतः क्षोणीं स्वदंष्ट्राग्रेण लीलया' इत्यादिरार्षोऽनुभवः स्मार्यते । 'गाढघटना' इति निष्कम्पनित्यस्थितौ हेतुः । अच्युतोऽयं वराहः । निष्कम्पत्वमनेककोटिसुखप्रसवानुकूलम् ॥

ब्रह्मस्तम्बमसौत् । आब्रह्म स्तम्बपर्यन्तं कृत्स्नं भूतजातं सुषुवे । असुरापहृतधराया अनिर्यातनेऽन्तः स्थितगर्भ-

भूतजीवराशयो विच्छिद्येरन् । भगवता दता तामुद्धृत्य तत्र तस्या निष्कम्पां स्थितिं संपाद्यानेककोटिसुखप्रसवसंभवो निर्वर्त्यते ॥

असौ । पुरोवर्तिष्ठत इव देवी भूराचार्याणामनुभवे । यथा 'सैषा देवी' इति श्रीस्तुत्यन्ते । ध्रुवमध्यक्षितोऽवतारवृत्तान्तः सर्वोऽपि स्तोत्रकाले । भूम्येकदेशमध्यस्थैरस्माभिः कथं तस्याः पुरोवर्तित्वेन निर्देश्यत्वस्य संभवः । ईदृशावतारदशापरोक्षणकाल एव तत्संभवः ॥

भगवती विश्वंभरा । विश्वं भरतीयम् स्वगर्भे । इमां बिभर्ति भगवद्दंष्ट्राङ्कुरकोटिः । तं बिभर्ति तस्य स्वो महिमा । अथ वा न सोऽपि । भगवतीं भगवान्बिभर्ति । 'विश्वंभरा भगवती भवतीमसूत ।' इत्युत्तररामचरिते । तत्रातिसुन्दरम् । 'सर्वं बिभ्रती तव माता त्वामप्यसूत' इति सीतां प्रति वचनं कथं तस्याः स्तुतौ पर्यवस्येत् । यथा सर्वान्प्राणिनो गर्भे बभार तान् सुषुवे, तथा त्वामप्यसूतेति खलु तद्वचनभङ्गीपर्यवसानम् । 'भगवती विश्वंभरा' इति पदयोः सम्यग्विनियोजनं क्रियते आचार्यैरित्यवधेयम् ॥

मुस्तेव । यथा मुस्तां लीलयानायासेन दन्ताग्रे बिभृ-

याद्वराहस्तथा विश्वंभरां बिभर्त्ययं ब्रह्मवराहः । यथा मुस्ताया निष्कम्पा निरपाया स्थितिः स्यात्तथा अस्या इति व्यज्यते । यथा मुस्ता स्तम्बादितृणप्ररोहस्य मूलं भवेत्तथेयं विश्वंभरा जगत्कन्दभूतेत्यपि व्यज्यते । वराहदंष्ट्रायां मुस्तेवातिसूक्ष्मा दृश्यते विश्वंभरा भगवद्दंष्ट्रायामिति च व्यज्यते । 'यथा वनाग्निःसरतो दृता धृता मतङ्गजेन्द्रस्य सपत्रपद्मिनी ।' इति गजेन्द्रदंष्ट्रागतपद्मिनीव भूपद्मं शुशुभे इति श्रीशुकानुभवः । 'दंष्ट्रानुषक्तां धरणीं दधानो जम्बालरेखामिव केलिलग्नाम् ।' इत्याचार्याणामनुभवः सङ्कल्पसूर्योदये । पङ्करेखावदत्यन्तसूक्ष्मा दृश्यते भूः । रेखा निरतिशयसूक्ष्मा । सपङ्के पल्वले विहरतो मुस्ताक्षतिं च कुर्वतो वराहस्य दंष्ट्रायां पङ्करेखालगनं सुसंभवि । अत्र मुस्तात्वेनानुभवः । तत्क्षतिः सहजा वराहाणाम् । तच्च वर्णितमुदाहृतशाकुन्तलश्लोके । खुरदघ्नप्रमाणे समुद्रपल्वले विहरतानेन वराहेण लब्धा जगत्कन्दभूता देवी तद्दंष्ट्रायां विहारलग्ना मुस्तेव भासते । 'हृदि सुररिपोर्दंष्ट्रोत्खाते क्षिपन्प्रलयार्णवं क्षितिकुचतटीमर्चन्दैत्यास्रकुङ्कुमचर्चया । स्फुटधुतसटाभ्राम्यद्ब्रह्मास्तवोन्मुखबृंहितः शरणमसि मे रङ्गिंस्त्वमूलकोलतनुर्भवन् ॥' इति श्रीमद्भट्टारकैर्ब्रह्मत्वप्रदर्शनं कोलवपुषः ॥

प्रत्यादिष्टपुरातनप्रहरणग्रामः क्षणं पाणिजै-
रव्यात्त्रीणि जगन्त्यकुण्ठमहिमा वैकुण्ठकण्ठीरवः ।
यत्प्रादुर्भवनादवन्ध्यजठरा यादृच्छिकाद्वेधसां
या काचित्सहसा महासुरगृहस्थूणा पितामह्यभूत् ॥

'दिवि स्पृशत्कायम्' 'सदावधूता जलदाः परापतन्' 'अम्भोधयः श्वासहता विचुक्षुभुर्निर्ह्रादभीता दिगिभा विचुक्रुशुः । द्यौस्तत्सटोत्क्षिप्तविमानसङ्कुला प्रोत्सर्पत क्ष्मा च पदातिपीडिता ॥' 'शैलाः समुत्पेतुरमुष्य रंहसा तत्तेजसा स्वं ककुभो न रेजिरे ।' इत्यस्य नृसिंहवपुषो निरतिशयबृहत्त्वव्यञ्जनं श्रीभागवते । 'सटाच्छटाभिन्नघनेन बिभ्रता नृसिंह सैंहीमतनुं तनुं त्वया' इति माघकवेस्तद्वपुषो बृहत्त्वानुभवः । 'हिरण्यकरघट्टितात्सपदि जृम्भितः स्तम्भतः । पुरः स्फुरति संभ्रमस्फुटसटाच्छोटनत्रुटद्घनघनारवद्विगुणबृंहितः सिंहराट्' 'सटाविधुतिसंभ्रमभ्रमितसप्तलोकस्थितिः' 'प्रत्यूढस्थेमभिमप्रलयघनघटाघोषणाडम्बराणि । क्षुभ्यत्सप्ताम्बुधीनि....अस्मद्भीतिव्यपोहं विदधतु नृहरेरट्टहासाद्भुतानि' इति विचित्रो ब्रह्मत्वानुभवो नृसिंहब्रह्मविषय आचार्याणाम् । अध्यक्षयाम इव नृसिंहं तद्वर्णनैः । 'प्रकर्षाद्विष्णुत्वद्विगुणपरिणाहोत्कटतनुः' इति श्रीभट्टानुभवः । विष्णोर्व्याप्तिरूपब्रह्म-

त्वं खल्वाक्षिप्तं शत्रुणा । तत्स्थापनार्थं खल्वयमवतारः । यथा ब्रह्मणो भक्तबृंहयितृत्वं तथा सत्यस्य तस्य भक्तसत्यापनं स्वभावः । आत्मसाम्यावहत्वं खलु तत्प्रकृतिः । ' सत्यं विधातुं निजभृत्यभाषितं व्याप्तिं च भूतेष्वखिलेषु चात्मनः ' इति व्याप्तिसत्यापनयोः सहपाठः । यथा वराहस्य नासा बलं तथा सिंहस्य नखं बलम् ॥

**प्रत्यादिष्टपुरातनप्रहरणग्रामः क्षणं पाणिजैः ।** १. अत्र भगवतस्तदायुधानां चोक्तिप्रत्युक्तिरूपसंवादो व्यज्यते । भगवन्तं सङ्ग्रामाय यियासन्तं सुदर्शनकौमोदक्यादिदिव्यायुधानि भगवता सह स्वानुगमनानुज्ञां निर्बन्धेन याचन्ते ' वयं पुरातनान्यायुधानि । बहुषु सङ्ग्रामेषु कृतसाहाय्यानि सम्यक्परीक्षितानि । चिरकृतयोधनयोग्यानि वयम् । पुरातनभृत्या वयम् । न वयं भूषणायेतरभूषणवत् । न वयमलंकारार्थे तिष्ठामः । अस्त्राणि खलु वयम् । शत्रुं प्रहर्तुं वयमास्महे । वयं बहून्यास्महे । ईदृशः सङ्ग्रामोत्सवो दुर्लभः । न वयमधुना परित्याज्यानि । अस्माकं प्रत्यादेशो न न्याय्यः । एवंरूपा आक्षेपाः 'प्रत्यादिष्ट' 'पुरातन' 'प्रहरणग्राम' इत्यादिशब्दैर्व्यज्यन्ते । तान्याश्वास्यन्ते भगवता 'क्षणमात्रं भवद्भिर्मद्विश्लेषः सह्यः । क्षणकाले प्रतियास्यामि । भवदधिकारे एतेषां पाणि-

जानां निवेशनं क्षणिकमेव । न तेभ्यो भवदधिकारः स्थिरं दास्यते । तेषां भवत्प्रतिभूत्वं भवत्प्रत्यादेशत्वं न क्षणादधिकं स्यात् । यूयमेव मम स्थिरायुधाधिकारभाजः । एवं वदं-स्तानि पाणिजैः 'तिष्ठन्तु भवन्तः, मानुयान्तु माम्' इति संज्ञां करोतीव तानि क्षणं निषेधन् भक्तवागसत्यताभि-या । पाणिजैः प्रत्यादिशति तान्यनुगमनोत्सुकानि 'क्षणम्' इति कथयन् । 'पाणिजान्' प्रदर्श्य तान्याश्वासयति, न भेतव्यं भवद्भिरहं निरायुधो यास्यामि प्रबलशत्रुं योद्धुमिति । सन्त्येतेऽद्भुताः पाणिजा इति प्रहरणग्रामशब्देन द्योत्यत इव । पाणिजशब्देन नखविशेषणतया पाणेरपि ग्रहणेन तेन निषेधनमभयप्रदानं च व्यज्यते । यथा वराहस्य घोणा बलम्, तथा सिंहस्य नखानि बलम् । तद्बलं भूयः प्रदर्श्यते सर्वैरपि कविभिः । 'समुग्धकान्तास्तनभङ्गभङ्गुरैरुरोविदारं प्रतिचस्करे नखैः ।' 'वक्ष एष निरदारयन्नखैः' इति माघानुभवः । 'नखक्षुण्णारातिक्षतजपटलैः' इति भाट्टानु-भवः । 'नखरशृङ्गदम्भोलिभिः' 'दम्भोलिश्रेणिदीप्यत्खरन-खरमुखक्षुण्णदैतेयवक्षोनिष्ठ्यूतासृक्स्रवन्तीभरितदशदिशादर्शि-तापूर्वसन्ध्यः' इत्याचार्यानुभवोऽन्यत्र । 'माद्यन्मोहमहेभ-कुम्भदलनप्रोद्भूतसन्मौक्तिकद्योतालंकृतचित्सुखाद्वयवपुः श्री-

मान्नृकण्ठीरवः। प्रह्लादस्य गिरः प्रमाणनविधौ दिव्याकृति स्तम्भतो निर्यातः प्रकटीभवेत्स हृदयाम्भोजे ममाखण्डितम् ॥ इत्यद्भुतोऽनुभवः श्रीनृसिंहविषये कल्पतरुकाराणां श्रीमदमलानन्दयतीनाम्। एतच्छ्लोकभाववर्णने नातिविस्तरामभिरमज्जनभयात् ॥

अव्यात्त्रीणि जगन्ति। पाणिजैरव्यादित्यप्यन्वयः। 'प्रह्लादह्लादनानि' इति सततं प्रकृष्टह्लादमग्नमत एव प्रह्लाद इति ख्यातं प्रह्लादमद्भुतमपूर्वं ह्लादयितुमतिसुन्दरात्यन्तसुघटितनृसिंहतनुः परिजगृहे। तामेवागौणीं नृसिंहतनुं सर्वदास्मल्लोचनचमत्काराय अस्मत्पुरतोऽवस्थाप्यास्मान्मन्दह्लादान्ह्लादयतु। अद्भुतसुन्दरवपुःप्रदर्शनेनावनं प्रार्थ्यते। 'नारसिंहवपुः' इत्युक्त्वा तस्य भीषणत्वादि निवार्य सौन्दर्यं प्रख्यापयितुमनुपदमेव 'श्रीमान्' इति पठ्यते सहस्रनामसु। तद्वपुर्दर्शनानन्तरं प्रत्येकं लोकोत्तरसुन्दरं नरं वा सिंहं वा द्रष्टुं जुगुप्सा जायेतेत्युक्तं श्रीमद्भट्टारकैस्तद्भाष्ये। तदेव वर्णितं श्रीरङ्गराजस्तवे 'नृहरिदशयोः पश्यन्नौत्पत्तिकं घटनाद्भुतं नरमुत हरिं दृष्ट्वैकैकं समुद्विजते जनः' इति ॥

अकुण्ठमहिमा वैकुण्ठकण्ठीरवः। क्षणिकोऽयमवतारः।

हतो रिपुः । गतश्च प्रह्लादः । कथं तत्प्रादुर्भावेन त्रिजगदनु-ग्रहस्तत्परित्राणं च प्रार्थ्येत इति चेत्, अकुण्ठमहिमायमित्युच्यते । यदा प्रह्लादः प्रतिजज्ञे पितृसंनिधौ 'हरिः सर्वत्र' इति, तत्सत्यपरीक्षकः पिता यत्र कुत्र वा स्वेष्टस्थले हरिं प्रदर्शयेत्याज्ञापयेत् । तत्काङ्क्षितस्थलेऽप्रदर्शने भक्तवाग्वन्ध्या भवेत् । 'शिरः कायाद्धरामि ते' इत्याक्रोशन्पिता तमर्भकं हन्यात् । न हि तत्पूर्वं पित्रा साक्षात्स्वबलेन पुत्रहनने प्रवृत्तम् । तदानीमेव तदिच्छा उद्घुष्यत । तदिच्छाप्रकटनक्षण एव भगवता प्रादुर्भवनीयम् । हरिं दिदृक्षति पिता तेन योद्धुम् । हरेर्व्याप्तिं प्रतिजानीते पुत्रः । अवतरता च हरिणा सिंहेन भाव्यम् । आदौ 'किं साधु मन्यते भवान्' इति पृष्टवन्तं पितरम् 'तत्साधु मन्येऽसुरवर्य देहिनाम्....वनं गतो यद्धरिमाश्रयेत' इति प्रत्याह सुतः । तत्रापि सिंहमेव हरित्वेनासूसुचत् । वनं गतो वनराजं सिंहमेवाश्रयेत । प्रह्लादस्य हरिः सिंह एव स्यात् । यत्र कुत्रापि हरिप्रदर्शनेच्छाप्रकटनसंभवेन सर्ववस्त्वन्तर्भगवता नृसिंहरूपेणावस्थितमिति प्रदर्श्यते आचार्यैः 'स्तम्भैकवर्जमधुनापि करीश नूनं त्रैलोक्यमेव नियतं नरसिंहगर्भम्' इति । तत्र 'त्रैलोक्यम्' इति । अत्र त्रीणि जगन्तीति वर्णनसाम्यमवधेयम् । गर्भभूतोऽच्यु-

तो न च्यवेत् । अमोघोऽयं गर्भोऽधुनापि तत्र तत्रास्ते । तत्र तत्र गर्भस्थितस्तत्र तत्र भक्तमनोरथेन बहिः प्रादुर्भूय वा त्रीणि जगन्ति रक्षतु । अखिलेषु भूतेषु व्याप्तिः सत्याप्यते श्रीनृसिंहेणेति श्रीशुकः । तच्च सर्वत्रान्तर्यामितया गर्भे नृसिंहत्वेनावस्थानेऽत्यन्तस्वरसं भवेत् । अकुण्ठमहिमान्यात्मवर्णाणि भूतानि । महिमा च व्याप्तिः । व्याप्तिश्च नृहरित्वेन । 'व्याप्तिं च भूतेष्वखिलेषु चात्मनः' इत्यस्य ग्रहणं महिमाशब्देनेत्यवधेयम् । कथं सिंहस्य सर्वव्याप्तत्वमिति चेत्— उच्यते । अयं वैकुण्ठकण्ठीरवोऽकुण्ठः कण्ठीरव इति । श्रीमच्छङ्कराचार्यास्तदनुयायिनश्च नृसिंहोपासकाः । अत्र पूर्वोदाहृतावतारश्लोके 'नरहरिणपतिः' इत्यधिकवर्णनं तद्विषयेऽवतारान्तरेभ्यः । 'वैकुण्ठीये तु कण्ठे' इत्युक्तं तैर्भगवत्कण्ठविषये । 'श्रीमान्नृकण्ठीरवः' इति कल्पतरुकृतः । वैकुण्ठकण्ठीरव इत्याचार्याः । यादृग्गम्भीरं रूपं तादृङ्नाम ॥

यत्प्रादुर्भवनादवन्ध्यजठरा यादृच्छिकात् । यद्यपि त्रैलोक्येऽपि नरसिंहो गर्भत्वेनावस्थितः, अखिलभूतमध्ये एकैव स्थूणावन्ध्या प्रसुषुवे नृसिंहम् । इतरत्सर्वमन्तर्वदास्ते । या काचित्स्थूणासूत । किमित्येकस्यां प्रादुर्भावः, इतरत्रान्तरेवावस्थानमिति चेदुच्यते 'यादृच्छिकात्' इति । भगवदि-

च्छैव नियामिका। असुरेच्छा वा यदृच्छाशब्देन ग्राह्या। इतरत्र प्रदर्शनं स नाचकाङ्क्ष। यदृच्छया सोऽत्रैव दिदृक्षां प्रकटीचकार। किमिदमघटितघटनम्। तिष्ठतु नरसिंहयोरेकत्र सुश्लिष्टं घटनम्। तिष्ठतु महासुरेणाप्यघटनीयत्वेन निश्चितपरस्परविरुद्धानेकद्विकहानघटनम्। इयमचेतना स्थूणा चेतनानां चेतनमसूत। किमिदमाश्चर्यम्। 'परस्परविरोधे हि न प्रकारान्तरस्थितिः। नैकतापि विरुद्धानामुक्तिमात्रविरोधतः॥' इति न्यायः श्रद्धेऽसुरेण वरवरणकाले। ब्रह्मणः सकलतर्कातीतत्वं विस्मृतं तेन। 'नैषा तर्केण मतिरापनेया' इत्याद्युपनिषदर्थो न गृहीतास्तेन विरोचनजातीयेनासुरेण॥

**वेधसां या काचित्सहसा महासुरगृहस्थूणा पितामह्यभूत्**। अघटितघटना दृढीक्रियते। वेधसां पितामहानां पितामह्यभूत्स्थूणा। वेधसां पितामहानां पितामही स्थूणा गर्भं धत्ते। सूते च सर्वलोकपितामहम्। महासुरशब्दः प्रयुज्यते हिरण्यकशिपुविषये श्रीशुकेन। 'सुतं महाभागवतं महासुरः' 'अभ्यहनन्महासुरः' इति शुकमुखाच्च्युतः शब्द आचार्यैर्गृह्यते। महासुरगृहे वेधसां पितुर्जन्म। यद्यपि स महासुरः, स्वेन स्वीयेन वा भगवतो भागवतोत्तमस्य च गर्भे धारणमस्य भाग्यमित्यपि व्यज्यते। यथा प्रह्लादोऽस्य गर्भे, तथा भग-

वानेतद्गृहस्थूणागर्भे । महासुरगृहस्थूणासुप्रज इति श्रीनृसिंहः संबोध्येत । उत्तरा सन्ध्या प्रवर्तते उत्तिष्ठ नरसिंह । गर्भवासकालतारतम्यं बहुविधं वर्तते । कुत्रापि नैकक्षणमात्रावच्छेदो गर्भवासस्य । प्रह्लादः प्रतिजज्ञे 'स सर्वत्र' इति । क्वासौ ? यदि स सर्वत्र कस्मात्स्तम्भे न दृश्यते इत्यनुपदं पितुः प्रश्नः । अनुपदमेव 'दृश्यते' इत्यवतारदर्शनं प्रह्लादस्य । दृश्यत इति प्रह्लादवचनमपि भवेत् । 'विमूढा नानुपश्यन्ति पश्यन्ति ज्ञानचक्षुषः ।' यद्यपि पित्रा न तदा दृष्टः, नापि लोकेन, ज्ञानालोकेन पुत्रेण पूर्वमेव दृष्टः स्यात् । प्रह्लादार्थे नृसिंहः, तेनैव प्रथमं दृश्येत । तद्दृष्टं तत्प्रदर्शितमनूद्यते 'सत्यं विधातुं निजभृत्यभाषितम्' इत्यवतारवर्णनश्लोकेन । ब्रह्मस्तम्बमसौद्विश्वंभरेत्युक्तं पूर्वश्लोके । अत्र ब्रह्मपितरं ब्रह्म स्तम्भः प्रासूतेत्युच्यते । अत्र वा पूर्वश्लोके वा असुरनिरसनं न प्रकाशितम् । साधुपरित्राणमात्रं वर्णितम् । शुभतननं खलु प्रार्थितं प्रथमश्लोके ॥

**व्रीडाविद्धवदान्यदानवयशोनासीरधाटीभट-**
**स्त्रैयक्षं मकुटं पुनन्नवतु नस्त्रैविक्रमो विक्रमः ।**
**यत्प्रस्तावसमुच्छ्रितध्वजपटीवृत्तान्तसिद्धान्तिभिः**
**स्रोतोभिः सुरसिन्धुरष्टसु दिशासौधेषु दोधूयते ॥**

त्रिविक्रमो भवन्वामनः 'अणोरणीयान्महतो महीयान्' इति श्रुतिं निदर्शयतीव । एकस्मिन्नवतारे एककाले उभयप्रदर्शनम् । त्रिविक्रमस्य निरतिशयबृहद्रूपबृहत्त्वे न कोऽपि संशयीत ; 'भूः पादौ' इति स्मृतिः । भूरेकः पाद इति भगवांस्ततोऽपि बृहत्त्वं प्रदर्शयति । 'पादोऽस्य विश्वाभूतानि' इति श्रुतिरन्वर्थ्यत इव त्रिविक्रमेण । 'यः पार्थिवानि विममे रजांसि । योऽस्कभायदुत्तरं सधस्थं विचक्रमाणस्त्रेधोरुगायः' इति त्रयी गम्भीरनिर्ह्रादिभिः शब्दैर्डिण्डिमवदुदजूघुषत्त्रिविक्रमयशः । एवमेवायं वेदमन्त्रोऽनुभूतः श्रीभट्टार्यैः 'दैत्यौदार्येन्द्रयाच्ञाविहतिमपनयन्वामनोऽर्थी त्वमासीर्विक्रान्ते पादपद्मे त्रिजगदणुसमं पांसुलीकृत्य लिल्ये । नाभीपद्मश्च मानश्रममिव भुवनग्राममन्यं सिसृक्षुस्तस्थौ रङ्गेन्द्र वृत्ते तव जयमुखरो डिण्डिमस्तत्र वेदः ॥' इति स्तवे । अद्भुतोऽयं श्लोकः प्रकृतावताराविषयः, तं च संग्रहेणानुभवामः । प्रह्लादपितृसभायां दिविस्पृशत्कायो नृसिंहोऽभूत् । तद्वंश्यवैरोचनेः सदस्यतिकनीयान्वामनोऽभूत् । त्रीणि जगन्त्यव्यादिति पूर्वावतारविषये प्रार्थना कृता । तदवतारेण गूढमेव गर्भत्वेनावस्थितं त्रिलोक्याम् । यथा रामावतारे ऋषिभिः प्रार्थितम्, कृष्णावतारे तानेव गोपिकाः

कृत्वान्वर्थ्यते, तथा नृसिंहावतारविषये कृता प्रार्थनेदानीं पूर्यते त्रिजगतां पादाम्भोजस्पर्शदानेन। तत्संयोग एव परमपुरुषार्थः। वैरोचनो यद्यपि दितिजः, स परमोदारः। यस्मै कस्मैचिदर्थिनेऽर्थितं सर्वं दद्यात्। स्वेनापहृतं त्रैलोक्यराज्यमरिरपीन्द्रो यदि याचेत नियतं तस्मै दद्यात्। सुरनायको याच्ञाया अपत्रेपे। सर्वलोकनायकस्तस्मिन्स्वाश्रिते याच्ञालाघवं याच्ञाभङ्गं चापनयन्स्वयं याचको बभूव। कोऽयं नाथगुणः। नाथ इत्यात्मनः समाख्यां नाथनेन कर्तृव्युत्पत्त्यापि पूर्णां करोतीव प्रभुः। 'लोकनाथः पुरा भूत्वा सुग्रीवं नाथमिच्छति' इति तस्य नाथनम्, नाथकामनं च स्वभावः। यद्यपि 'त्रैलोक्यमपि नाथेन येन स्यान्नाथवत्तरम्' इति तेनैव सनाथतरं जगत्। 'इन्द्रयाच्ञामपनयन्वामनोऽर्थी त्वमासीः' इतीन्द्रस्य याचकत्वपरिहाराय स्वयं भिक्षुको भवतीति द्योत्यते। 'मध्ये वामनमासीनं विश्वेदेवा उपासते' इति कठश्रुतिर्वामनावतारविषय इति श्रीमन्मध्वमुनयः। तत्रार्थवर्णने सर्वदेवोपास्यत्वं वामनस्योपपाद्येत। तस्य च ब्रह्मरुद्रादिमान्यत्वं प्रसिद्धम्। 'शब्दादेव प्रमितः' इति सूत्रेण परामृष्टः शब्दो वामनश्रुतिरूपशब्दः, नेशानपदघटितः 'ईशानो भूतभव्यस्य' इति लिङ्गप्रतिपादकशब्दः,

यद्रीत्यार्थवर्णने ईशानरूपश्रुतेरितीश्वरपरत्वतात्पर्यं विवर्णयिष्येत तत्पक्षपातिभिरिति तेषामाशयः स्यात् । वामनशब्दो नियतं भगवन्तमेव बोधयेत् ; पादपद्मो भुवो माता, पिता वा, उभयं वा । तदाश्लेषे वत्सभूतास्त्रिजगत्तत्रासज्जत । अणोर्वामनस्य पादपद्मेऽणुपरागवत्त्रिलोकी निलिल्ये । कारणे लयः सहजः । एतेन भगवतो निरतिशयबृहत्त्वम्, विश्वशरीरत्वं च विचित्रमुपपादितं भवति । लयानन्तरं सृष्ट्या भाव्यम् । भगवतोऽन्यतः कुतः सृष्टिसंभवः । तल्लक्षणत्वेन तदसाधारणं खलु विश्वस्रष्टृत्वम् । तदवयवान्तरं नाभीपद्ममन्यं भुवनग्रामं सिसृक्षति । तन्नालीकसृष्टब्रह्मसृष्टं जगत्स्वदेहावयवान्तरभूतपद्मान्तरस्य नालमभूदिति स्पर्धयेवान्यन्मानक्षमं जगत्सिसृक्षति । नित्योऽपौरुषेयो वेदो बन्दीव त्रिविक्रमयशांसि गायति । ताताड्यते तद्विक्रमडिण्डिमम् । ऋगेषा भेरीदुन्दुभिताडनवदुच्चगम्भीरा शब्दतोऽर्थतश्चेति रसिकमनःसाक्षिकम् । 'उरुगायः' इति वदन्ती श्रुतिस्तद्यशसो गायमानत्वं व्यनक्ति । उरुभिर्बहुभिरुरु विस्तीर्णं दीर्घमुच्चैरुद्गीयत इत्युरुगायः । उरुगाने उरुतालापेक्षा स्वरसा । सा च पूर्यते श्रुत्यैव दुन्दुभिनिर्ह्रादगम्भीरशब्दैः । शब्दैस्तालो निर्वर्त्यते । वेदशब्देषु सर्वे शब्दा अन्तर्भवेयुः । न शब्दो-

ऽन्यं शब्दं सहेत । जयभेरी संपादितेत्युक्तम् । अष्टसु दि-क्सौधेषु स्थिरध्वजपट्टिकाः स्थाप्यन्त इति प्रदर्श्यतेऽत्राचार्यैरि-ति रसिकैर्भाव्यम् । त्रिविक्रमयशो वेदो घोषयतीति श्रीमद्भ-ट्टार्याः । जिगीषितस्य दैत्यस्यौदार्येण जितोऽजितो वामनस्त-द्यशः प्रख्यापयितुं स्वयं लोकविक्रान्तभटो भूत्वा पदातिरेव लोकानतिवेगेन क्षणकालेनाक्रम्याष्टसु दिशासौधेषु पवि-त्रामृतध्वजपटीर्वर्तयति स्वचरणनिर्गलत्सुरसिन्धुस्रोतःफेनै-रित्याचार्याः प्रदर्शयन्ति । 'ध्वजारविन्दाङ्कुशवज्रलाञ्छनम्' इति चरणगतध्वजेनापि त्रिजगदङ्कनं चारु प्रदर्श्यते । वाम-नभूमिकया वैरोचनसदःप्रवेशः । करे पतिते तोये वामनस्त्रि-विक्रमो भवति । पूर्वावतारे विग्रहविशिष्टस्य भगवतो व्या-प्तिर्न्यरूपि । अधुना विग्रहैकदेशभूतपादमात्रेण त्रिजगद्व्या-प्तिर्निरूप्यते । स्वयं बृहत्त्वं वदान्यस्य बलेर्यशसो बृह्मणत्व-मित्युभयरूपं ब्रह्मत्वं प्रदर्श्यत इत्यवधेयम् ॥

व्रीडाविद्धवदान्यदानवयशोनासीरधाटीभटः । औदा-र्यजलधिर्भगवान्बलिं याचते । याच्ञाया व्रीडा सहजा । तया च प्रांशोरपि वामनीभवनं सहजम् । महत्या नवीन-दीनभावजन्यव्रीडया विध्यते भगवान् । ततोऽपि महती दातुर्बलेर्व्रीडार्थिनोऽल्पयाचने । प्रतिषेधन्तं गुरुमुल्लङ्घ्य ददा-

ति । दानेऽप्यल्पमेव याचितमपूर्वदुर्लभपात्रेणेति लज्जया विद्धो भवति । तल्लज्जागुणेन विद्धो भवति प्रतिग्रहीता भगवान् 'ह्रिया देयम्' इति शास्त्रीयधर्मानुष्ठानेन सन्तोषितः । उदारो भगवानौदार्यरसज्ञः । दातरि ह्रीरूपश्रियः शोभां स एव वेद । स्वस्य याच्ञाजन्यव्रीडावृतत्वेऽप्यल्पयाच्ञाप्रयुक्तव्रीडाविद्धत्वरूपदातृगुणेन विद्धस्तद्यशो दिगन्तेषु स्वेनैव सद्यः पादचारेण गत्वा प्रथनीयमिति दिशोऽन्तान्धावतीव बृहद्रूपं परिगृह्य । नायं त्रिविक्रमावतारो जगन्ति मातुम्, स्वीकर्तुम्, इन्द्राय प्रदातुं च । किं तु दातुर्बलेरौदार्ययशः स्वयं क्षणकाले दिगन्तविश्रान्तं प्रथयितुमित्याचार्या व्यञ्जयन्तीव । यद्यप्यवतारात्पूर्वमन्य उद्देशोऽभूत्, अधुना तद्विस्मृत्य बलियशसः सद्यः प्रथनमेव काङ्क्ष्यते बलिगुणविद्धेन । वदान्यशब्दो वद अन्यदपीति व्युत्पन्नः स्यादिति भाति । 'अन्यं वरं वृणीष्व, अन्यद्वद' इति खल्ववोचद्दाता दानवः । तद्विषये वदान्यशब्दोऽन्वर्थः । ईदृशव्युत्पत्तिरप्याचार्याभिप्रेतेव ! वदान्यदानवशब्दयोरत्यन्तं वर्णसाम्यम् । दानवेषु वदान्यो दुर्लभ इति तस्याधिकं यशः । बलिं जेतुमागतो भगवांस्तद्व्रीडागुणेन जितः स्वयं तद्दास्यमङ्गीकृत्य तत्सेनाग्रभटो भूत्वा तद्विजयध्वजं स्वयं पादचारेण सर्वत्र नयन्नटाट्यते ।

यद्यपि यशस्वी प्रभुर्व्रीडाविद्धोऽधोमुखस्तिष्ठति, औदार्ययशसोऽल्पदानेन ह्रासः समजनीति, अयं तद्गुणाजितः शत्रुभटस्तद्यश उद्धृतमुद्घोषयतीति धाटीशब्देन व्यज्यते । यशसः स्वयं प्रथनं स्वभावः 'न हि कस्तूरिकामोदः शपथेन निवार्यते ।' ततोऽप्यग्रयायी भवत्ययमग्रभटः । स्वतः प्रथने भगवतो ब्रह्मणत्वं न सिध्येत् ॥

त्रैयक्षं मकुटं पुनन्नवतु नस्त्रैविक्रमो विक्रमः । शिवस्य शिवत्वकरणं प्रथमम् । अनन्तरं त्रिजगतः पवित्रीकरणं पादविन्यासेनेति व्यज्यते । 'देवो नः शुभमातनोतु' इति खलु शुभत्वविस्तारणमवतारेभ्यः प्रार्थितम् । शुभत्वरूपशिवत्वं प्रदीयते । 'त्रैयक्षम्' इत्यक्षित्रयेणापि सादरवीक्षणं भगवत्पादस्य मकुटनिवेशनकाल इति व्यज्यते । सादरं सानन्दं तत्र त्रीण्यपि विलोचनानि व्यापारयामासेति भावः । धूर्जटिशिरसि पतन्ती गङ्गा विचित्रं प्रीणात्याचार्यान् । विन्ध्याचलविकटसन्ध्यानटजटापरिभ्रान्तेति गङ्गा वर्ण्यते । नटराजो धूर्जटिः । सन्ध्यायां सन्ध्यारक्तजटाभिर्विचित्रमानन्दताण्डवं वर्तयते । नृत्यतस्तस्य शिरसि गङ्गा विष्णुपदान्निपत्य भूयोभिरावर्तैरतिद्रुतं बम्भ्रमीति । को वा तद्दर्शनेन न रञ्जितो भवेत् । नृत्यतः शंभोर्जटासु पतन्ती गङ्गा विचित्रं नृत्य-

तीति चारु प्रदर्श्यते आचार्यैः 'जडकिरणशकलधरजटिल-नटपतिमकुटतटनटनपटुविबुधसरित्' इत्यादिना । नृत्यतश्चूडायां तत्स्था शशिकलापि नरीनर्ति । गङ्गा चातिवेगं सब्रह्मावर्तं नृत्यति। धूर्जटेरङ्गमर्धं नारी, अर्धं पुमान् । उमाकृतव्यतिकरे तदङ्गे लास्यताण्डवभेदेन द्वेधा विभक्तं नाट्यम् । यद्यपि रुद्रः, स्वार्धभूतया नार्यायमतिसुकुमारलास्यमपि दर्शयतीति रुद्रशब्देन व्यज्यते महाकविना। सन्ध्यायां चेदं नर्तनम् । एवं खलु श्रीनटराजस्य नटनमनुभाव्यमिति प्रदर्श्यते तद्रसज्ञैराचार्यैः । 'कदा पुनस्त्रिविक्रम त्वच्चरणारुणाम्बुजं मदीयमूर्धानमलंकरिष्यति' इत्युत्कण्ठन्ते महान्तः । अस्मदज्ञानदशायामलंकरणेन न तुष्यामः । पुनः कदा वयमनुभवाम इत्युत्कण्ठ्यत इति पुनःशब्देन द्योत्यत इव । 'विष्णुं क्रान्तं वासुदेवं विजानन्' 'लोकविक्रान्तचरणौ शरणं तेऽव्रजं प्रभो' इत्यादिवचनान्यत्र भाव्यानि । विश्वामित्रः 'विष्णुर्मानुषरूपेण चचार वसुधातले' 'मया तु भक्त्या तस्यैव वामनस्योपभुज्यते' इति च पुंसां दृष्टिचित्तापहारिविग्रहस्य रामस्य पुरतो वामनस्य शोभां प्रशशंस । वामनावतारस्य सर्वातिशायिलावण्यमिति वकुलभूषणादिभावुकानामनुभवः । भूमौ पादं न निक्षिपेयुर्देवा लाघवभिया । अयं देवदेवः

सर्वं पृथिवीतलं निबिडं निरन्तरं पस्पर्श पादेन । एतद्व्यज्यते ऋषिणा 'वसुधातले चचार' इति । पूर्वं वामनश्चचार । इदानीं तदभिन्नस्य तव तदाश्रमे सञ्चरणं संपाद्य, तत्सञ्चरणानन्दमनुभवेयमिति खलु मयात्र त्वदानयनम्, न क्रतुरक्षणार्थमित्यपि व्यज्यते । 'नभःस्थले लङ्घितार्कशशिमण्डलः क्रमः' इति माघानुभवः । 'चरणपङ्कजेनाङ्कितम्' इति दयाशतके ॥

**यत्प्रस्तावसमुच्छ्रितध्वजपटीवृत्तान्तसिद्धान्तिभिः स्रोतोभिः सुरसिन्धुरष्टसु दिशासौधेषु दोधूयते ।** शौरिपदोज्झिता सुरसरिदाकाशे निष्पतन्ती दिक्षु सर्वत्र व्यापिनीः शुभ्राः फेनच्छटाः प्रक्षिपति । गिरिनिर्झरपातं दृष्टवतामेतत्सुविदितं स्यात् । ताश्च यशस्ततय इव, श्वेतध्वजपटा इव च दृश्यन्ते । 'नलः सितच्छत्रितकीर्तिमण्डलः' इति नैषधारम्भे । स्वग्रन्थस्यापि तादृशयश आशास्त इव कविर्यथा सुधावत्स्वग्रन्थस्य सुरैरपि पानमाशास्ते । पूर्वार्धे 'कथाम्' इति पठता तन्मनोरथः स्पष्टमेव प्रकटीचक्रे, स्वकाव्यस्यापि तत्कथात्वात् । सिद्धान्तशब्देन स्वासिद्धान्तगुरुपङ्क्तिविषयः 'दिक्सौधाबद्धजैत्रध्वजपट...' इत्यादिश्लोकः स्मार्यत इव । नाभीपद्मसिद्धान्तवदयं पादप्रदर्शितो भगवत्परत्वसिद्धान्तः ।

यशसः पवित्रत्ववर्णनमुचितम्। न गङ्गाम्भसः पवित्रम्। न त्रिविक्रमपादात्पावित्रम्। स्वच्छावदातगङ्गाफेनच्छटा ध्वजायन्ते। भगवत्पादो ध्वजवाही भटः। दिक्सौधा ध्वजस्थापनस्थानानि। एवं बृह्म्यते भगवदभिमानपात्रस्य यशः॥

**क्रोधाग्निं जमदग्निपीडनभवं सन्तर्पयिष्यन्क्रमा-**
**दक्षत्रामपि संततक्ष य इमां त्रिःसप्तकृत्वः क्षितिम्।**
**दत्वा कर्मणि दक्षिणां क्वचन तामास्कन्द्य सिन्धुं वस-**
**न्नब्रह्मण्यमपाकरोतु भगवानाब्रह्मकीटं मुनिः॥ ७॥**

अयमवतारः शेषभूतं कंचिदनुप्रविश्य। शेषस्य निरतिशयशक्तिप्रदर्शने बृम्हणत्वरूपबृहत्त्वं सम्यगुपपाद्येत। तच्छक्तिदातृब्रह्मणो निरतिशयबृहत्त्वमप्युपलक्ष्येत। विप्रे परशुरामे सर्वक्षत्रियविनाशनानुरूपां महतीं बाहुशक्तिमादधाति। भगवद्बाहुजाः क्षत्रिया विप्रबाहुना घात्यन्ते। किमर्थं विप्रयोनौ शक्त्यावेशनम्? लोकरक्षार्थं स्थापिताः क्षत्रियाः। निरायुधा दीना अनाथा ब्राह्मणास्तैस्त्रातव्याः। 'क्षत्रियैर्धार्यते शस्त्रं नार्तशब्दो भवेदिति' इति क्षत्रियवंश्यो दाशरथिः। यैरेव ब्राह्मणा रक्षणीया यदि ते क्षत्रिया एवं तान्घातयेयुर्यथा जमदग्निं कार्तवीर्यादिः, तेषां निर्मूलनं नान्या-

ध्यं स्यात् । यदि प्रजारक्षणार्थं नियुक्ता अधिकारिणस्तत्रापि सेनाधिकारिणः स्वयं प्रजाघातुका भवेयुस्तेषां प्राणान्तिको दण्डो न्याय्यः स्यात् । तथैवेदानीं नियमः सर्वेषु देशेषु सेनानये । को ब्राह्मणः ? 'मौनं चामौनं च निर्विद्याथ ब्राह्मणः' इति श्रुतिप्रतिपादितो महातपस्वी 'ब्रह्मण एवायम्' ब्रह्ममात्रसंबन्धी । शमप्रधानास्तपोधना राज्ञा सर्वथा रक्षणीयाः । तद्विषये किंचित्कारेण तत्सुकृतं सर्वमपि दायत्वेन लभ्यते । तदपकृतौ च तद्दुष्कृतं सर्वमपकारिणि सङ्क्रमेत् । 'शास्त्रफलं प्रयोक्तरि' इत्यनुल्लङ्घनीयं न्यायमपोद्यात्यन्तादरेणैनं निरायुधं क्रुध्यन्तमप्रतिक्रुध्यन्तं स्वदेहयात्रायां निरपेक्षं रक्षितुं श्रुतिरेवं शशास । कार्तवीर्यः प्रसिद्धः पृथिवीपालः । 'अन्तःशरीरेष्वपि यः प्रजानां प्रत्यादिदेशाविनयं विनेता । अकार्यचिन्तासमकालमेव प्रादुर्भवंश्चापधरः पुरस्तात् ॥' इति हृषीकेशवत्प्रजानामकार्यचिन्तनसमय एव चापहस्तः पुरस्तादाविर्भूय भीषयित्वाकार्यकरणान्निवारयामास । तादृशी सिद्धिः संपादिता तेन परेषामकार्यनिवारणे । यदि स धर्मसेतुः स्वयं तपस्विब्राह्मणपीडको भवेत्, तत्पुत्रस्य कोपो जायेतैव । रौद्रबीभत्सरसौ प्रदर्श्येतेऽस्मिन्नवतारे । क्रोधो न सहजो भगवतः । आहार्यः स तस्य । 'क्रोधमाहारयामास'

इतिवत् । न क्रोधः स्थायीभावो भवेद्भगवतः, यथा परशुरामे विद्यते । क्षत्त्रजातिसामान्यस्य क्षत्त्रियेण भगवतोन्मूलनं न न्याय्यम् । ब्रह्मण्यपराधो ब्राह्मणावेशनेन दीर्घवैरः परिहर्तुमुचितः । जामदग्न्यो रुद्रशिष्यः । महावीरः कोपनश्च । तस्मिन्स्वशक्तिमावेश्य तद्द्वारा चिकीर्षितं साधयति । दशस्ववतारेषु द्वाववतारौ शेषजीवयोः । अवतारेष्वपि शेषी शेषमपि निवेशयति । तस्य कनीयानपि भवति । अवतरन्तौ शेषशेषिणौ समकालेऽपि भुवमलंकुर्वाते । यथात्र स्वेच्छया शेषं गुरुत्वेन पूजयति लालयति च, तथा परमपदेऽपि तं संमानयिष्ये इति रहस्यमवतारेऽपि प्रकाश्यते । परशुरामकृत्यं जुगुप्सितमिति मन्येत । अब्रह्मण्यापाकरणरूपनिमित्तेन तादृशघोरकृत्यानि निरवर्त्यन्त इत्याचार्या व्यञ्जयन्ति 'अब्रह्मण्यमपाकरोतु' इति । कथमन्यथा तद्घोरकृत्यस्य शुभत्वं निरुह्येत । हतक्षत्त्रियतनुगलत्क्षतजधारापूर्णानि घोरपङ्कमहासरांसि खल्वनेन व्यरचिषत । पञ्चत्वमापन्नक्षत्त्रियरक्तैः पञ्च सरांसि । क्षत्त्रमात्रप्रलयकृदयं रुद्रशिष्यः । भगवदाहितशक्त्या तस्य तादृशं बृहत्त्वम् ॥

**क्रोधाग्निं जमदग्निपीडनभवं सन्तर्पयिष्यन्क्रमात् ।**

पितृवधनिमित्तः क्रोध इति क्रोधहेतुप्रदर्शनं तस्य दोषैकान्त-

त्वनिवृत्तये । जमदग्निरित्यग्निरूपाक्षरघटितनामा पिता । तमग्निं पीडयामास शत्रुः । तदात्तभूतपुत्रस्य क्रोधाग्निस्तेनाज्ज्वल्यत । पीडितोऽग्निरन्यमग्निमुदपादयत् । अयं पुत्रः पितृवधोत्थितक्रोधाग्निं पितरं जमदग्निं मेने, उभयोरप्यग्न्यन्तत्वात् । क्रोधाग्निं च पितरं मत्वा तं संततर्प शत्रुगात्रक्षतजधाराभिः । दीर्घायुश्चिरजीवी परशुरामः, तत्क्रोधोऽपि चिरजीवी । बहुकालं तेन पितृतर्पणं कार्यम् । चिरजीविनः क्रोधो दीर्घः । क्रमादेकविंशतिकृत्वः प्ररोहतीर्नवनवक्षत्रियसन्ततीर्विच्छिद्य विच्छिद्य तद्रक्तधाराभिर्निवापाञ्जलिं ददौ । क्रुद्धस्य करुणागन्धो न स्यात् । शत्रुरुधिरदर्शनं तस्य परमप्रीणनं भवेत् । स्त्र्यपि द्रौपदी दुःशासनरुधिरेण स्वकेशपाशमाञ्जिजिषत् । क्रोधाग्नौ रुधिरमेव होतव्यम् । 'देवः स्वर्गगतोऽपि शात्रववधेनाराधितः स्यात्' इति राक्षसः । दिवं गतोऽपि पिता शत्रुवधेनाराध्येत । अमृतत्वतुल्यत्वेन वर्णितं स्वर्गसुखमनुभवन्नपि ततोऽप्यधिकं सुखमनुभवेच्छत्रुवधेनेति मुद्राराक्षसश्लोकस्य भाव इत्यवधेयम् । अग्नावाज्यादिकं क्रमेण हूयेत, न यौगपद्येन, सकृद्वा । 'क्रमेण युगपद्वा' इति विकल्पशिरोवर्णनं क्षणभङ्गवादिभिस्ताथागतैः । नास्य क्रोधस्य क्षणिकत्वम्, किं त्वनेकजन्मानुगतत्वम् । अतः

क्रमेण होमः । यथाग्निर्हुताशनस्तथा क्रोधाग्निः शत्रुरक्ता-शनः ॥

**अक्षत्त्रामिह संततक्ष य इमां त्रिः सप्तकृत्वः क्षितिम् ।**
'द्यावापृथिवी निष्टतक्षुः' इति श्रुतिः प्रत्यभिज्ञाप्यते । क्षितितक्षणमवतारबृहत्त्वोपलक्षकम् । न तेनेव जगन्निर्माणं तक्षणेन, किं तु क्षितेस्तक्षणेन निष्कण्टकीकरणमात्रम् । क्षत्त्रसामान्यं कण्टकमभूत् । तन्मात्रमपनीतं सम्यक्तक्षणेन । अक्षत्त्रां संततक्ष । छेद्या वृक्षगुल्मलतादयो यथा छेत्तारं न प्रतियुध्येरन्, तथास्य प्रतिभटाः परशुना छिद्यमाना न प्रत्ययुध्यन्निति व्यज्यते । मूलानि निर्मूलयितुं क्षितितलं संतक्ष्येत । क्षत्त्रप्ररोहं निर्मूलयितुं पुनः पुनः क्षितितलं संततक्ष । 'अलावीद्भूपालान् पितृगणमताप्सीत्तदसृजा' इति श्रीभट्टपादाः ॥

**त्रिः सप्तकृत्वः** । अयं नीरसो निष्करुणः शुष्कः श्रोत्रियः । 'दश पूर्वान्दशापरान् पुनाति' इति शुश्राव । आत्मानं चान्तर्भाव्य एकविंशतिः संपद्यन्ते । पावनकर्मणि पूर्वेषामपि तच्छास्त्रविषयीकरणं सुलभम् । अत्र तु हननविषये न शत्रुपूर्व्या दिवं गताः पुनर्हन्येरन् । पित्रादिप्रीणनाराधनपावनादिविषये श्रुता त्रिःसप्तसंख्याद्रियतेऽनेन श्रोत्रि-

येण वध्यसंख्यायाम् । अयं ब्रह्मचारी । अयं ब्राह्मणः, न जितं राज्यमीप्सेत् । राजगुणभूतरञ्जनव्यापारोऽस्यात्यन्तमशक्यः । विप्रत्वाद्विरक्तत्वाच्च जितां पृथिवीं काश्यपाय प्रादात् । ब्राह्मणस्येदृशी विरक्तिः । राज्ये यदि सज्जेत तदर्थमेव क्षत्रहननं भवेत्, न पितृसन्तर्पणार्थम्, क्रोधाग्निसन्तर्पणार्थं वा । राज्यकामना क्रोधैकान्त्यं विहन्यात् । अयं क्रोधमेव जानाति, नार्थकामौ । धर्मं तु जानातीति तृतीयपादेन बोध्यते ॥

**दत्वा कर्मणि दक्षिणां क्वचन तामास्कन्द्य सिन्धुं वसन्** । न स्वावस्थानार्थं स्वल्पमपि स्थलमियेष । कृत्स्नं ददौ । दत्वा भूमेर्बहिर्गत्वा समुद्रमास्कन्द्य तत्र स्वतेजसा कंचित्स्थलं कल्पयित्वा तत्रोवास ॥

**अब्रह्मण्यमपाकरोतु भगवानाब्रह्मकीटं मुनिः** । किं शुभमयं क्रोधैकरस आतन्वीतेति चेत्, आब्रह्मकीटमब्रह्मण्यमपाकुर्यादित्युच्यते । ब्रह्मण्यविरोधे किमापद्येत । 'ब्राह्मणो मम देवता' इत्युक्तभगवद्दैवतस्य हानिः स्यात् । धर्मेण लोको ध्रियते । दैवेन लोको ध्रियते । वेदैर्लोको ध्रियते । तत्त्रितयं ब्राह्मणाधीनम् । असहनमुनिरित्युक्तः कोपनो मुनिः । 'आशस्त्रग्रहणादकुण्ठपरशोस्तस्यापि जेता

मुनेः' इति तस्य मुनित्वेन ग्रहणं वेध्यम् ॥

पारावारपयोविशोषणकलापारीणकालानल-
ज्वालाजालविहारहारिविशिखव्यापारघोरक्रमः ।
सर्वावस्थसकृत्प्रपन्नजनतासंरक्षणैकव्रती
धर्मो विग्रहवानधर्मविरतिं धन्वी स तन्वीत नः ॥

निरतिशयबृहत्त्वादिपरत्वप्रदर्शनमस्मिन्नवतारे कथं शक्यम् । 'आत्मानं मानुषं मन्ये' इति ब्रह्मत्वमत्यन्तं विसस्मरेऽवतरता भगवता । आसुरमोहनार्थं तानात्मनो मानुषत्वं मानयितुं मुक्तकण्ठं रुरोद दण्डकेषून्मत्तवत्, पामरवच्च । अस्मिन्नवतारेऽपि परत्वं प्रदर्शनीयं ब्रह्मत्वाहानार्थम्, अवतारेष्वपि बृहत्त्वमभ्यक्षयितुं च । कथमेतत्संपाद्येत । यद्यपि स न स्वयं बृहत्त्वं प्रदर्शयामास, तच्छरेण प्रलयाग्नेरपि घोरतरं सागरशोषणरूपोपसंहर्तृत्वादिकं प्रादर्शि । तच्छरस्य तादृशबृहत्त्वेन तद्बृहत्त्वमभ्यक्ष्येत । शूरतमः शत्रुपक्षप्रधानमल्लः शक्रजिदेतस्मिन् सागरशोषणविक्रमं दृष्ट्वा विसिष्मिये, तेन च राममुत्तमवीरं स्वसदृशप्रतियोद्धारं मेने इति सुन्दरं प्रदर्श्यते काव्यप्रकाशोदाहृते 'क्षुद्राः संत्रासमेते विजहत हरयः क्षुण्णशक्रेभकुम्भा युष्मद्देहेषु लज्जां दधाति परममी

सायका निष्पतन्तः। सौमित्रे तिष्ठ पार्श्वं त्वमसि न हि रुषां नन्वहं मेघनादः किंचिद्भ्रूभङ्गलीलानियमितजलधिं राममन्वेषयामि॥' इति श्लोके॥

अस्यावतारस्य मुख्यं प्रयोजनं शरणागतिरूपसूक्ष्मधर्मप्रकाशनम्। तद्धर्मसंस्थापनार्थोऽयमवतारः। सुग्रीवं प्रपन्नं जिघांसंस्तत्पितृसमस्तज्ज्येष्ठो वाली अस्य प्रथमवध्योऽभूत्। अनन्तरमेव रावणः। यद्यपि स भार्यापहारी महापराधी, न स प्रपन्नं कमप्यहिनत्। मतङ्गाश्रमरूपस्थलविशेषलाभात्सुग्रीवप्राणा ररक्षिरे। यो धर्मः प्रतितिष्ठापयिषितस्तद्विघाती प्रधानशत्रुर्भगवतः। नूतनाश्रितो विभीषणो राघवेण समुद्रशरणवरणं रुरुचे। तदिच्छामनुरुध्याञ्जलिं प्राङ्मुखः कृत्वा प्रतिशयनभूमिकया पयोधिपुलिनमभूषयत्। अवतारभूमिकामध्ये प्रदर्शिता प्रतिशयनभूमिका। तेन चोदितो महोदधिराधिकमाधिकं विजजृम्भे। सागरतरणार्थं मार्गादानेन न चुक्रोध प्रभुः। किं तु प्रपत्तिमार्गविहननेन। तदानीमेव समुद्रराजस्य शृण्वत उद्घोषितः प्रभुणा तत्पुलिने प्रपत्तिधर्मः। तद्धर्मविहनने महान् क्रोधः समजनि। तत्समयसंरम्भविजृम्भितस्तस्य सर्वेश्वरभावः, यो महता प्रयत्नेन पूर्वं गुप्तः। उद्घोषितं च तदा 'सागरं शोषयिष्यामि' इति। 'कुशली यदि

काकुत्स्थः किं न सागरमेखलाम् । महीं दहति कोपेन युगान्ताग्निरिवोत्थितः ॥' इति सीतया पप्रच्छे हनूमान् । स च प्रश्न आवेदितः प्रभोर्भक्तेन प्राज्ञेन दूतेन । सागरमेखलामिति वदन्त्या सीतया सागरोऽपि तस्य युगान्ताग्नेरिन्धनं भवेन्महीदहनायेति व्यञ्जितम् । 'जगत्सशैलं परिवर्तयाम्यहम्' इति च क्रोधसमये उक्तं भगवता । न मही सीतामाता दिधक्ष्येत भगवता । मह्येकदेशभूतलङ्का ददहे हनूमता । सा च पुनर्नवीकृता । सागरेण महदपराद्धम् । तद्दहनं सीतामभिनन्दयेत्, इन्द्रजिदादिशत्रूंश्च विस्मापयेत्, अपराधिनं समुद्रराजं च शि.ष्यात् । क्षितितक्षणमुक्तम् । इदानीं समुद्रदहनमुच्यते । नाटकेषु विचित्राद्भुतदर्शनान्यावश्यकानि ॥

पारावारपयोविशोषणेत्यादि । जलेन शाम्येत्प्रज्वलितोऽग्निः । अग्निना जलं तप्येत । आशीविषोपमाविशिखप्रसरदग्निना दिधक्ष्यतेऽब्धिः । 'अग्निर्वै मृत्युः सोऽपामन्नम्' इति बृहदारण्यके याज्ञवल्क्यः । लोकनाशकोऽग्निस्तन्नाशका आप इति मृत्युमृत्युत्वमपां दर्शितं तत्र । तदन्यथा क्रियते भगवता । 'अग्नेरापः' इति श्रुतिः । अप्कारणकोऽग्निः । प्रलयाग्नौ अपां लय उचितः । प्रलयाग्नेः

समुद्रदहनसामर्थ्यं न्याय्यम् , लयप्रकरणात् । कारणे लयस्य न्याय्यत्वात् । प्रलयकारणत्वं च ब्रह्मणः । जन्मादेः प्रत्येकं ब्रह्मलक्षणत्वमस्ति खलु । तच्छराणां तदिच्छामात्रेण समुद्रदहनशक्तिः स्यात् । परावरस्य भगवतो विशिखः पारावारं दहति । ज्वालाजालविहारहारीति तत्साम्यं वा, तदाधिक्यं वा । दयानिधिना खलु प्रपत्तिमार्गः प्रकाश्येत । उत्तरार्धे च प्रपत्तिः प्रस्तूयते । कथं पूर्वार्धे ईदृशनिष्करुणत्वघोरत्वादिप्रदर्शनमिति चेत् , तत्प्रत्युक्तं दयाशतके ‘ अपां पत्युः शत्रूनसहनमुनेर्धर्मनिगलं कृपे काकस्यैकं हितमिति हिनास्ति स्म नयनम् । विलीनस्वातन्त्र्यो वृषगिरिपतिस्त्वद्विहतिभिर्दिशत्येवं देवो जनितसुगतिं दण्डनविधिम् ॥’ इति । सागरं दण्डयितुं प्रवृत्तः कोपस्ताद्धितं परिणनाम । अतः पूर्वार्धेऽपि दयाप्रभावस्यैव वर्णनम् । समुद्रराजं तादृशकोपजनकापराधिनमपि शरणवरणक्षणे ररक्ष । तद्द्विषांश्च तेनैव कोपेन जघान । कोपस्यातिबृहत्त्वप्रदर्शनं तच्छमनोपायभूतनमस्कारस्य ततोऽपि बृहत्त्वं प्रदर्शयेत् । ‘ प्रलयसमञ्जलिरसौ तव निग्रहास्त्रे ।’ अन्यापि गतिर्वर्तते पूर्वोत्तरार्धयोरेकीकरणे । सागरः प्रेप्सितां सीतां व्यवधत्ते । मध्यपाती स सीताप्राप्तिपरिपन्थी । सीता च शोकान्मुमोचायोषितश्चेतनः । चेत

नवृजिनविरचितस्तस्य भवसागरः । हनूमत्समेन गुरुणा चेतनस्य भर्तृप्रेप्सोत्कण्ठानिवेदने तत्संश्लेषव्यवधायकपापरूपभवसागरं शोषयति भगवान्विशिखदवाशुशुक्षणिना । चेतनज्ञानाग्निना जनितो भगवत्क्रोधाग्निः सर्वकर्माणि भस्मसात्कुर्यादित्यध्यक्षीकार्यत इव भगवता । अस्मज्ज्ञानजन्यभगवत्क्रोधाग्निरस्मत्पापसागरं शोषयति । नास्मज्ज्ञानमात्रस्य तत्सामर्थ्यम् ॥

सर्वावस्थसकृत्प्रपन्नेत्यादि । सर्वलोकशरण्यकर्तृकशरणागतिभङ्गरूपमहापराधिनमपि शरणं गतं ररक्ष । तदुच्यते सर्वावस्थेति । तादृक्प्रवृद्धो मन्युरार्द्रापराधिनस्तस्य प्रणामक्षणे शशाम ॥

धर्मो विग्रहवान् । शत्रोर्मारीचस्य वचनं रावणं प्रति । शत्रुमपि रमयति गुणै रामः । 'न रामः परदारान्वै चक्षुर्भ्यामपि पश्यति' इति तत्काले शात्रवाविष्टा कैकेयी । शत्रुकृतप्रशंसा कथमयथार्था स्यात् । तत्कृतप्रशंसां सर्वः श्रद्धास्यति । अनुकूलकृतप्रशंसा पक्षपातप्रयुक्ता स्यात् । श्रद्धा खलु मुख्यमङ्गं प्रपत्तेः । सा चोत्पाद्यते शत्रुप्रशंसाशब्दोपादानेन । धर्मश्च प्रपत्तिरूपधर्मः स्यात् ॥

अधर्मविरतिं धन्वी स तन्वीत नः । किं शुभमातनो-
त्वयम् । अधर्मविरतिरूपं शुभमातनोतु । भवसागरविरतिं
तनोतु । सागरशोषणवृत्तान्तेन सेतुनिर्माणं ज्ञाप्यते । तेन च
सेतुना ब्रह्महत्याद्यधर्मविरतिर्भवति । 'धन्वी सः' इति
'रामः शस्त्रभृतामहम्' इति प्रसिद्धः स धन्वी । 'वीर्य-
वान्न च वीर्येण महता स्वेन विस्मितः' इति स्ववीर्यावि-
स्मितोऽपि स्वयमेवावतारान्तरे दाशरथ्यवस्थमात्मानमेकध-
न्वित्वेन प्रशशंस । 'शिष्यस्तेऽहं शाधि मां त्वां प्रपन्नम्'
इति प्रपन्नस्य शिष्यस्य तत्त्वमवश्यकथनीयम्, न गोप-
नीयम् । 'शरणमुपगतान्स्त्रायते शार्ङ्गधन्वा' 'अनितरश-
रणानामाधिराज्येऽभिषिञ्चेच्छमितविमतपक्षा शार्ङ्गधन्वानु-
कम्पा' इति शरणागतत्राणविषये शार्ङ्गधन्वित्वकीर्तनमेत-
च्छ्लोकार्थं व्यञ्जयतीव ॥

फक्कत्कौरवपत्तनप्रभृतयः प्रास्तप्रलम्बादय-
स्तालाङ्कस्य तथाविधा विहृतयस्तन्वन्तु भद्राणि नः ।
क्षीरं शर्करयेव याभिरपृथग्भूताः प्रभूतैर्गुणै-
राकौमारकमस्वदन्त जगते कृष्णस्य ताः केलयः ॥

शेषशेषिणावुभौ समकालं भुवमलंचक्रतुः । शेषश्च शेष्य-

भवच्छेषी च शेषः । शेषमत्यन्तं संमानयते शेषी । स च शेषिधर्मः सम्यक्स्थाप्यते । 'कचित्क्रीडापरिश्रान्तं गोपोत्सङ्गोपबर्हणम् । स्वयं विश्रमयत्यार्यं पादसंवाहनादिभिः ॥' इति रामपादसंवाहनं कृष्णेन । बृहत्त्वप्रदर्शनं खलु मुख्यकृत्यमत्र । तत्कथं निरूप्यत इति चेत्, हलाग्रेण हस्तिनपुरमाकृष्य गङ्गायां पातनम्, तेनैव यमुनाकर्षणमित्यादिभिः कृत्यैस्तस्य बृहत्त्वमुपलक्ष्यते । 'अक्षत्त्रां क्षितिं करिष्यामि' इत्याद्यो रामः । 'अद्य निष्कौरवामुर्वीं करिष्यामि' इति तृतीयो रामः । यथा कृष्णः शिशुर्विपुलोलूखलं चकर्ष तथा तज्ज्येष्ठः 'लाङ्गलाग्रेण नगरमुद्विदार्य गजाह्वयम् । विचकर्ष स गङ्गायां प्रहरिष्यन्नमर्षितः ॥' उभयोर्भ्रात्रोः कर्षकत्वं समानम् । एकः संकर्षणः, अपरः कृष्णः । एको हलधरः । अपरश्चक्रधरः । एकेन शेषेणाद्यरामेण क्षितिर्निष्कण्टकं सन्ततश्चे । अनेन हलधरेण सा कृष्यत इव । क्षेमकृषीवलोऽयं हलधर इति श्रीभट्टपादाः । कौरवपत्तनफक्कनेन ब्रह्मबृंह्मितशेषस्याद्भुतबृहच्छक्तिः प्रदर्श्यते । ब्रह्मणो बृहत्त्वं ब्रह्मयितृत्वं च दर्शितं भवति । शेषशेषिणोरुभयोरपृथग्भूतत्वरूपानन्यत्वं सम्यग्बोध्यतेऽत्र तद्विहृतीनामपृथग्भूतत्वकथनेन अपृथग्भूतशब्दः सिद्धान्तप्रतितन्त्रभूतमर्थमुद्घाटयतीव । त-

दृढ्यक्षीकरणं मुख्यप्रयोजनम् । विशिष्टाद्वैतरूपभद्राण्ययं तनोति । 'भद्राणि नस्तन्वीत' इत्युक्तम् 'नः शुभमातनोतु' इतिवत् । किं भद्रं तन्वीतेति पृष्टे प्रतिवचनं दीयते उत्तरार्धेन । उभयोरपृथग्भूतयोः क्षीरशर्करयोरिव परस्परास्वादकत्वम् । तादृशं भद्रमाशास्यते । तदेवाभिप्रेयत इव क्षेमशब्देन श्रीभट्टार्यैः । एतादृशापृथक्सिद्धिरूपभद्रविस्तारणादस्य बलभद्र इति नामेवेति व्यञ्जयन्त्याचार्याः शुभार्थकभद्रशब्दमत्र प्रयुञ्जानाः । उभयोरनन्यत्वमाभिप्रेत्य श्रीभाष्यकारैर्बलरामकृतप्रलम्बमुष्टिकादिहननमपि कृष्णचेष्टितत्वेनावर्ण्यतेत्युक्तं तात्पर्यचन्द्रिकायाम् । 'भगवतो बलभद्रस्याप्येतदंशरूपत्वात्प्रलम्बमुष्टिकादिहननमप्येतत्कर्तृकतयोपात्तम्' इति । तदेवानन्यत्वमत्रापि द्योत्यत इवाचार्यैरपृथग्भूतशब्दं प्रयुञ्जानैः ॥

फकत्कौरवपत्तनप्रभृतयः । कृष्णो गजं कुवलयापीडं जघान । तज्ज्येष्ठो रामो गजाह्वयं नगरं हलाग्रेण विचकर्ष । प्रभृतिशब्देन यमुनाकर्षणवृत्तान्तो द्योत्यते । 'अनागतां हलाग्रेण कुपितो विचकर्ष ह ।' पादयोः पतिता यमुना चक्रन्द 'राम राम महाबाहो न जाने तव विक्रमम् । यस्यैकांशेन विधृता जगती जगतः पते ॥' इति । एनेन ब्रह्मवत्तस्य

महिमा सुस्पष्टं प्रकाश्यते । यदा सा ‘ परं भावं भगवतो भगवन्मामजानतीम् । मोक्तुमर्हसि विश्वात्मन्प्रपन्नां भक्त-वत्सल ॥’ इत्यभयं ययाचे, सद्यस्तदपराधमक्षाम्यद्बल इत्यु-च्यते । ‘ ततो व्यमुञ्चद्यमुनां याचितो भगवान्बलः ।’ अ-नेन पूर्वोत्तराभ्यां स्थापितशरणागतत्राणधर्मोऽनेनापि प्रख्या-पित इति सूच्यते ॥

तालाङ्कस्य तथाविधा विहृतयः । कनीयानिव रागतालादौ नायं रसिकः । अस्य तालो ध्वजाग्रे चिन्हभूतः । नेतरं तालं जानात्ययम् ॥

तन्वन्तु भद्राणि नः । ‘ नः शुभमातनोतु ’ इति य-दुक्तं प्रथमश्लोके तदिहापि प्रार्थ्यते । उचितमिदं भद्रे भद्र-प्रार्थनेति व्यज्यते बलभद्रनामदृष्टभद्रशब्दप्रयोगेण । किं भद्रं प्रार्थ्यत इति चेदुच्यते उत्तरार्धे ॥

क्षीरं शर्करयेत्यादि । उभयोः शेषशेषिणोस्तद्व्यापारयोश्च परस्परापृथग्भूतत्वेनान्योन्यास्वादयितृत्वरूपं भद्रं विवक्ष्यते भद्रप्रार्थने । शेषी क्षीरम् । शेषः शर्करा । शर्करीभूतः शेषः शेषिणमधिकं स्वादयति । केवलो दाशरथी रामो न तथैकः शोभेत, यथा गुहेन सहितो लक्ष्मणेन च सीतया । यावन्तः

शेषास्तावानधिकमधुरिमा शेषिणः । कृष्णस्य केलयः स्वादुत्वेन प्रसिद्धा इति 'ताः' इत्यनेन व्यज्यते । कृष्णशब्देन निर्वृतिभूमिरिति निर्वचनलब्धार्थो विवक्ष्यते । स्वयं निर्वृतिभूमिः कृष्णः । अखेलन् केलीरहितोऽपि सँ निर्वृतिभूमिः । तस्य कृष्णस्य केलयो जगते स्वदेरन् । ताः प्रसिद्धाः कृष्णकेलयोऽपि बलभद्रकेलिभिरपृथग्भूता अत्यन्तं रसवत्योऽभूवन् । अपायधुरंधरस्य साहसरसिकस्य कृष्णस्य क्षणविश्लेषमपि न सेहे ज्येष्ठ इति व्यज्यते श्रीमद्भट्टैः 'यद्विश्लेषलवोऽपि कालियभुवे कोलाहलायाभवन्' इति ॥

नाथायैव नमःपदं भवतु नश्चित्रैर्विचित्रक्रमै-
भूयोभिर्भुवनान्यमूनि कुहनागोपाय गोपायते ।
कालिन्दीरसिकाय कालियफणिस्फारस्फटावाटिका-
रङ्गोत्सङ्गविशङ्कचङ्क्रमधुरापर्यायचर्या यते ॥

निर्वृतिभूमिराचार्याणां कृष्णावतारः । तथा चोक्तं तात्पर्यचन्द्रिकायां नवमाध्यायचतुर्दशश्लोकभाष्यटीकायाम् 'कृषिर्भूवाचकः शब्दो णश्च निर्वृतिवाचकः ।' इति कृष्णशब्दोऽपि पुरुषार्थहेतुत्वप्रतिपादनमुखेन परव्यूहादिसमस्तावस्थासाधारण इति ज्ञापनाय व्यापकयोः (नारायणवासुदेवशब्दयोः) मध्ये

पठितः । अवतारान्तरेष्वपि कृष्णशब्दः प्रयुज्यते ‘ उद्धृतासि वराहेण कृष्णेन शतबाहुना ’ इति । अस्यावतारस्य ब्रह्मत्वे न कोऽपि संशयीत । ‘ नाहं प्रकाशः सर्वस्य योगमाया-समावृतः ’ इति श्लोकमवतारयन्तो मधुसूदनसरस्वत्य ऊचुः ‘ ननु जन्मकालेऽपि सर्वयोगिध्येयं श्रीवैकुण्ठस्थमैश्वरमेव रूपमाविर्भावितवति संप्रति च श्रीवत्सकौस्तुभवनमालाकिरीटकुण्डलादिदिव्योपकरणशालिनि कम्बुकमलकौमोदकीचक्रवरधारिचतुर्भुजे श्रीमद्वैनतेयवाहने निखिलसुरलोकसंपादितराजराजेश्वराभिषेकादिमहावैभवे सर्वसुरासुरजेतरि विविधदिव्यलीलाविलासशीले सर्वावतारशिरोमणौ साक्षाद्वैकुण्ठनायके निखिललोकनिस्ताराय भुवमवतीर्णे विरिञ्चिप्रपञ्चासंभविनिरतिशयसौन्दर्यसारसर्वस्वमूर्तौ बाललीलाविमोहितविधातरि तरणिकिरणोज्ज्वलदिव्यपीताम्बरे निरुपमश्यामसुन्दरे करदीकृतपारिजातार्थपराजितपुरन्दरे बाणयुद्धविजितशशाङ्कशेखरे समस्तसुरासुरविजयिनरकप्रभृतिमहादैतेयप्रकरप्राणपर्यन्तसर्वस्वहारिणि श्रीदामादिपरमभक्तमहावैभवकारिणि षोडशसहस्रदिव्यरूपधारिणि अपरिमेयगुणगरिमणि महामहिमनि नारदमार्कण्डेयादिमहामुनिगणस्तुते त्वयि कथमविवेकिनोऽपि मनुष्यबुद्धिर्जीवबुद्धिर्वेत्यर्जुनाशङ्कामपनिनीषुराह भगवा-

न्' इति । साधूक्तं श्रीमद्ब्रह्मानन्दैरेतद्विषये 'मधुसूदनसरस्वत्याः पारं वेत्ति सरस्वती । सरस्वत्याः परं पारं वेत्ति वै मधुसूदनः ॥' इति । भूतार्थव्याहृतिरेषास्याश्च स्तुतिः । ब्रह्मत्वप्रदर्शिका विश्वरूपादिवृत्तान्ता बहवः सन्ति । किमर्थं तेषामन्यतमस्येहाग्रहणम् ? यदि कौमारकेऽपि ब्रह्मत्वं निदर्श्येत; तत्तत्सम्यगुपपादयेत् । मिथ्यागोपस्य विश्वगोपत्वं प्रदिदर्शयिष्यन्त्याचार्याः । गोपायेदित्यवतारान्तरेषु प्रार्थना । गोपवदाचरेदित्यर्थद्वयं भवेदत्र । तत्र ह्यास्यते वैचित्र्यदिदर्शयिषुभिराचार्यैः । 'चित्रैर्विचित्रक्रमैः' इत्यस्मिन्श्लोकेऽपि वैचित्र्यसक्तताप्रकटनम् । तर्हि शैशवेऽपि मात्रे मुखं व्यादाय तत्र विश्वं प्रादर्शि । तदपि गोपालबालकृतम् । बाल्ये प्रदर्शनादपि कौमारके तत्प्रदर्शनं निपुणतरं स्यात् । किमर्थं कालियमर्दनचरित्रोपादानमिति चेत्, सन्त्यत्र बहवो हेतवः । रङ्गे धामनि नटनं खलु प्रतिजज्ञे । वृत्ता अवतारा अत्र समाप्यन्ते । भाव्यवतारः कश्चिदवशिष्टः । वृत्तावतारपरिसमाप्तौ नृत्तवर्णनसंभवे तदुपादानमत्र सुसङ्गतम् । अत्र कालियफणा रङ्गं भवतीत्युच्यते । नवनीतनटनादेर्यद्यपि नवनीतादपि स्वादुत्वमस्ति, न तेन बृहत्त्वमुपपाद्येत । कृष्णत्रयमस्मिश्चरित्रे सङ्गतमिति चारु दर्श्यते श्रीशुकेन

'विलोक्य दूषितां कृष्णां कृष्णः कृष्णाहिना विभुः' इति वदता । तन्मूर्धरत्नीनकरस्पर्शातिताम्रपादाम्बुजो-ऽखिलकलादिगुरुर्ननर्त ।' इति विचित्रं प्रदर्श्यते नर्तनो-पक्रमः । नर्तनभूमौ भूतले दीपपङ्क्यो निवेश्येरन्पा-दजङ्घादिसुन्दरललितचेष्टाः प्रकाशयितुम् । तत्कार्यं निर्व-र्त्यते नागशिरोरत्नैः पादाम्भोजाधःस्थितैः । अखिलकला-दिगुरौ रसमये कृष्णे नृत्यति सर्वे प्रसिद्धगायका धावन्ति नवनवक्रमान् शिक्षितुम् , तत्र तालादिना सह कर्तुं च । नर्तनेऽवश्यं तालापेक्षा। वेणुगाने न तथैयत्यम् । नवनीतनाट्ये निमन्थमुखरं दधि तालं निबबन्ध । अत्र 'तं नर्तुमुद्यतमवे-क्ष्य तदा तदीयगन्धर्वसिद्धसुरचारणदेववध्वः । प्रीत्या मृद-ङ्गपणवानकवाद्यगीतपुष्पोपहारनुतिभिः सहसोपसेदुः ॥' इति गन्धर्वसिद्धादीनां तत्रागत्य सर्वैस्तालाद्युपकरणवाद्यैर्गीतादि-भिश्च सह कर्तृत्वमुच्यते । प्रथमं वाद्याद्युपहारः । अनन्तरं पुष्पोपहार इति चारु व्यज्यते परमरसिकेन ऋषिणा । 'उप-सेदुः' इति गुरूपसदनं व्यज्यते । अखिलकलादिगुरुः खलु नृत्यति । अयं प्रथमगुरुर्न केवलमध्यात्मविद्यायाः । तमुप-सद्य बहु शिक्षणीयमस्ति सिद्धानामपीति सिद्धशब्देन व्य-ज्यते । आदिगुर्वपेक्षया ते साधका भवन्ति । ईदृशश्चित्रता-

ण्डवेन वृत्तावतारसमापनं रोचयन्त आचार्याः । त्रुटितजनताशोकः श्लोको य उदगायत भगवता, तदुपदिष्टोपायस्यानुष्ठानमपि संपादितं भवत्यनेन 'क्रोधोऽपि तेऽनुग्रह एव संमतः ।' 'तपः सुतप्तं किमनेन पूर्वम् ... कस्यानुभावोऽस्य न देव विद्महे तवाङ्घ्रिरेणुस्पर्शाधिकारः' इति परमकश्मलमापन्नस्य नागस्येषदपि प्रयत्नं विना शरणवरणबुद्धिमात्रसंपादनेन स्वशिरसां भगवत्पादाम्भोजसंयोजनप्रणामादिसौकर्यं बभूव । भगवत्पादाम्बुजसंयोगेन सर्वाणि शिरांस्यनुजगृहिरे । अस्माकमेकस्यापि शिरसस्तत्संयोगो दुर्लभः । शिरःसंख्याधिक्यं सकृत्प्रणामेप्यनेकप्रणामसंपादनानुकूलम् । 'तं प्रेक्षणीयसुकुमारघनावदातं श्रीवत्सपीतवसनं स्मितसुन्दरास्यम् । क्रीडन्तमप्रतिभयं कमलोदराङ्घ्रिं संदश्य मर्मसु रुषा भुजगश्छाद ॥' इति पुष्पहाससुकुमारं कुमारं क्रूरं ददंशायं नागः । परमापदमापन्नो रुधिरमुरु वमन् गत्यन्तराभावान्ननाम तम् 'नारायणं तमरणं मनसा जगाम' इति । तादृशमार्द्रापराधिनं शरणोक्तिमात्राद्ररक्ष ; न केवलं तं मुमोच, किं तु तमनुजग्राह सुपर्णादभयप्रदानेन । सर्वभूतेभ्यः खलु तेनाभयं दीयते 'सुपर्णस्त्वां नाद्यात्' इति । क्रोधोऽप्यनुकूलं परिणतः ।

समुद्रराजो भगवन्तं न ददर्श । आहूतो नागच्छन्मार्गदानाय । अयं नागो महापराधी, आर्द्रापराधी च । अयमप्यरक्षि । त्रिविक्रमपादाम्भोजेन त्रिजगदङ्कितमभूदित्युक्तम् । तदङ्कनं वयं न पश्यामः । अयं नागस्तत्पदलाञ्छितोऽभूत् । भगवत्पादचिन्हितोर्ध्वपुण्ड्रं शिरःसु दधार । न केवलं सः । तज्जातिभवाः कृष्णसर्पाः सर्वेऽपि तच्चिन्हवन्तोऽभूवन् । पुरा परमदुष्टोऽपि नाग आदिदेवं शरणं समाश्रित्य निर्दोषो भागवतोऽभूत् । एतद्वृत्तान्तेनान्यदपि तत्त्वं द्योत्यत इति वर्ण्यते आचार्यैर्यादवाभ्युदये ' प्रणेमुषां प्राणभृतामुदीर्णं मनो विनेष्यन्विषमाक्षवक्त्रम् । अकल्पयत्पन्नगमर्दनेन प्रायेण योग्यां पतगेन्द्रवाहः ॥ ' अस्मन्मनः कृष्णाहेरपि दुष्टम् , कृष्णतरं मलघनम् । विषमाक्षवक्त्रं मनः । प्रणमतां मनो मर्दनीयं भगवत्पादाम्भोजेन, विनेयं च । बह्वपायं मनोमर्दनम् , दुर्घटतमं च । कष्टं तत्कार्यं सिषाधयिष्यंस्तदपेक्षया सुलभेन कालियशिरोमर्दनेन मर्दनाभ्यासं करोतीव भगवान् । अस्मन्मनसो विनयनमेव वयमाकाङ्क्षामः । ' शतैकशीर्ष्णः ' इत्येकशतसंख्या कालियशिरसाम् । तत्पाठ आचार्यसंमतः स्यात् । ' शतं चैका च हृदयस्य नाड्यः ' इति मनसः एकशतनाडीवत्त्वम् । पतगेन्द्रवाहनो भगवान् किमर्थं कालि-

यशिरःसु नृत्येत्? गरुडवाहस्य स्ववाहभूतगरुडच्छायामात्रेण स नागो हन्येत । अस्मन्मनोमर्दनाय तदभ्यासं कर्तुमेव भगवान्कालियशिरांसि मर्दयन्ननर्तेत्युत्प्रेक्षितमाचार्यैः । कालियमर्दने महान् रस आचार्याणाम् । विचित्रं तन्नर्तनानुगुणवर्णनं दृश्यते यादवाभ्युदये 'लीलापतच्चरणलीलाहतिक्षरितहालाहले निजफणे नृत्यन्तमप्रतिघकृत्यं तमप्रतिममत्यन्तचारुवपुषम् । देवादिभिः समयसेवादरत्वरितहेवाकघोषमुखरैर्दृष्टावधानमथ तुष्टाव शौरिमहिरिष्टावरोधसहितः ॥'

नाथायैव नमःपदं भवतु नः । अयं मम नाथो रङ्गनाथः कालियशिरोनृत्तरङ्गे नृत्यति । नामैकदेशे नामग्रहणम् । यदुनाथः कृष्णो मम नाथः । तस्मिन् गरीयसी भक्तिः सूच्यते एवकारेण । यथा कालियं विनयते तथा मन्मनोऽपि संमर्दनेन विनीय तत्र नृत्यात् । तदनमने मर्दैत शिरः ॥

चित्रैश्चरित्रक्रमैरित्यादि । सर्वाश्चर्यमयो देवः किमस्य नाश्चर्यम् । अमुमेव नारद आश्चर्यत्वेन निर्धारेति हरिवंशे आश्चर्योपाख्याने । स्वस्मिन्नाश्चर्यपदविश्रान्तिं प्रतिषेद्धुमसमर्थः 'अहमाश्चर्योऽस्मि' इति नारदं प्रत्यूचे नाथः ॥

**कुहनागोपाय** । मिथ्यागोपाय, मायागोपाय ; गोपवेषाय ॥

**गोपायते** । यद्यप्यात्मानं योगमायया गोपयामास, अस्मान् गोपायति ॥

**कालिन्दीरसिकाय** । रसिकः खलु नृत्येत् । यथा भावुका रसिकास्तथा रसस्वरूपोऽयं परमरसिकः । कालिन्दीरसिकोऽयं यामुनः, तस्याः कृष्णाहिना दूषणं न मर्षयेत् । कालिन्द्यां व्रजयुवतिभिः सह जलक्रीडादेरयमहिः परिपन्थी । कालिन्दीरसिकत्वमहिमर्दने तदुपरि नर्तने च हेतुः । 'नद्यस्तदाकर्ण्य मुकुन्दगीतमावर्तबुद्बुदमनोभवभग्नवेगाः । आलिङ्गनस्थगितमूर्मिभुजैर्मुरारेर्गृह्णन्ति पादयुगलं कमलोपहाराः ॥' इति कालिन्द्याः कृष्णगानरसिकत्वम् । रसिकायां तस्यां नद्यां विहरणरसिकः कृष्णः । तस्यां नर्तनेन तां सन्तोषयितुमिच्छति ॥

**कालियफणिस्फारस्फटेत्यादि** । 'यद्यच्छिरो न नमदङ्ग शतैकशीर्ष्णस्तत्तन्ममर्द खलदण्डधरोऽङ्घ्रिपातैः ।' इति श्रीशुकानुभवः । समीचीनसन्मार्गनिर्माता खलु भगवान् । मार्गरचयितारः शर्कराश्चयान्निवेश्य तान्मर्दयेयुर्दण्डादिभिः ।

या याः शर्करा विषमा उद्धृतशिरसः स्युस्ता मर्द्येरन्मार्गसमीकरणार्थम् । एषोऽनुभवश्चारु प्रदर्श्यते आचार्यैरत्र । श्रीशुकस्तदेवाभिप्रेयाय 'ममर्द खलदण्डधरोऽङ्घ्रिपातैः' इति । अङ्घ्रिणापि संमर्दनं क्रियेत तत्कर्मकरैः । स्फटावाटिका मार्गो भवति । स्फारत्वं मार्गवैशाल्यं द्योतयति । विशङ्कचङ्क्रम—' 'पर्यायचर्या—' इति विषमा उच्छिरसः शर्कराः सङ्क्रम्यन्त इति सूच्यते ॥

यते । गच्छते नाथाय । अयं चर्यो गच्छत्यस्मत्सुचर्यासंपादनार्थमिति व्यज्यते ॥

भाविन्या दशया भवन्निह भवध्वंसाय नः कल्पतां
कल्की विष्णुयशःसुतः कलिकथाकालुष्यकूलंकषः ।
निःशेषक्षतकण्टके क्षितितले धाराजलौघैर्ध्रुवं
धर्मं कार्तयुगं प्ररोहयति यन्निस्त्रिंशधाराधरः ॥

श्वेताश्ववदनः श्रीहयग्रीवः प्रथमावतारः । तेनोपक्रान्तावतारनाटिका । कल्कः श्वेताश्वः । तद्वता कल्किनोपसंह्रियते । इदं चाचार्याणां परमभोग्यम् । धर्मसंस्थापनार्थमवताराः । धर्मेषु श्रेष्ठो कार्तयुगधर्मो निवृत्तिधर्मः । तस्य नितरां ग्लानिर्भवत्यस्मिन्कलियुगे । वर्धमाने कलौ क्षितितलं कृत्स्नं कण्टक-

जनैरेव व्याप्येत । 'उत्खातलोकत्रयकण्टकेऽपि' इति राघवस्य प्रथा लोककण्टकभूतरावणसंहारेण । 'त्रिदिवमुद्धृतदानवकण्टकम्' इत्यन्यदा दानवमात्रस्य कण्टकत्वम् । कलियुगान्ते नष्टप्रायत्वाद्धर्मस्याधरोत्तरत्वात्सर्वस्य निःशेषजनाः कण्टकभिवेरन् । कृत्स्नकण्टकजनानां क्षतिः कार्येत श्वेताश्वारूढेन निस्त्रिंशधरेण भगवता । संहारः सृष्टिश्चोभयमपि प्रदर्श्येतानेनावतारेण । लक्षणद्वयसमन्वयस्तेनोपपाद्येत । संहारोऽप्यनुग्रहे पर्यवस्येदिति निस्त्रिंशस्यापि मेघत्वम्, तेन च धर्ममेघेन कार्तयुगधर्मबीजप्ररोहजनकत्वं च वर्ण्यते । अयं चावतारो भावी, न वृत्तः । वृत्ता अवतारा अद्यापि सन्ति, आराध्यन्ते च तत्तद्वर्षेष्विति श्रीभागवते प्रोच्यते पञ्चमस्कन्धे । 'रम्यके भगवतः प्रियतमं मात्स्यमवताररूपं तद्वर्षपुरुषस्य मनोः प्राक्प्रदर्शितम्, स इदानीमपि महता भक्तियोगेनाराधयति' इत्यादिना । तादृशभक्तियोगं विनैव निर्भरत्वप्रपन्यारूढानां भावुकानामस्माकं भक्तिभराङ्किकित्रा भगवता स्वयं प्रत्यक्षवत्प्रदर्श्यन्ते वृत्तावताररूपाणीति प्रथमश्लोके व्यञ्जितमाचार्यैः 'लब्धनिर्भररसैरध्यक्षितो भावुकैः' इति । वृत्तावताराः सम्यग्वर्णिता महर्षिभिः । भविष्यदवतारोऽयम् । भूतावतारभावनाद्भाव्यवतारभावनं क्लिष्टतरं स्यात् ॥

भाविन्या दशया भवन्निह । परिदृश्यमाना इतरावतारमूर्तयो भूतदशया भवन्तः । अयं तु भाविदशया भवन् । सर्वेषामवताराणां व्यवहितत्वं तुल्यम् । इतरेषु भूतकालव्यवधानमत्र भविष्यत्कालव्यवधानमिति भेदः । सर्वेषां भवत्स्वरूपवर्तमानत्वतुल्यत्वमपि तुल्यमिति भवच्छब्देन व्यज्यते । अध्यक्षयिता सर्वशक्तो भगवान् । कर्मोपाधिहाने न त्रिकालभेदः । सर्वोऽपि कालः सततवर्तमान एव स्यात् । भगवता स्वावताराध्यक्षीकरणे भविष्यन्नपि भवन् भवेदिति व्यज्यते ॥

भवध्वंसाय नः कल्पताम् । किं शुभमस्माद्धाव्यते । न दुःखध्वंसः, किं तु भवध्वंसः । भवन्नयं भवध्वंसं तनोत्विति विरोधोऽप्यापाततश्चारु व्यज्यते ॥

कल्की । श्वेताश्वविशिष्टः ॥

विष्णुयशःसुतः । विष्णुयशसो जातोऽयम् । प्रणष्टप्राये विष्णुयशसि तद्यशोरूपकार्तयुगधर्मं प्रतिष्ठापयिष्यन्नयं यशोनामा जनिष्यते । 'तस्य नाम महद्यशः' इति भगवतो यशोनामत्वं प्रसिद्धम् । तस्य विष्णुयशोनामा ब्राह्मणोऽनुरूपः पितेति व्यज्यते । तमसावृते कलावयं यशसो जातः । अस्य

यशः कलिमलापहम् ॥

**कलिकथाकालुष्यकूलंकषः** । अयं धाराधरहस्तः प्रभूतं धर्मं वृष्ट्वा कालुष्यमपनुदति । धर्ममेघेन धर्मेण पापमपनुदति । कलिकथां कथाशेषं नयति । कथायाः कथाभवनं न्याय्यम् ॥

**निःशेषेत्यादि** । नैकोऽप्यकण्टको भवति । कृत्स्नं परिवर्तयित्वा नूतनशुद्धप्ररोहा अवतार्यन्ते ॥

**धाराजलौघैः** । कण्टकक्षपणसाधनो निस्त्रिंशो धर्मजलौघवर्षुकधाराधरोऽपि भवति । दुष्कृद्विनाशनमेव धर्मसंस्थापनसाधनमपि भवति ॥

**ध्रुवम्** ध्रुवं धर्मं प्ररोहयति । धर्मं ध्रुवं प्ररोहयति । ध्रुवमित्युत्प्रेक्षार्थकत्वमपि । धाराधरत्वेनोत्प्रेक्षा समर्थ्यते ॥

**धर्मं कार्तयुगं प्ररोहयति** । त्रेतायुगप्रवर्तितकार्तयुगवृत्तान्तो धर्मो विग्रहवांश्चक्रवर्तितनूजः । अयं कलियुगे तद्धर्मं प्ररोहयति ॥

**यन्निस्त्रिंशधाराधरः** । अस्य मेघस्य खड्गोऽपि मेघो भवति ॥

इच्छामीन विहारकच्छप महापोत्रिन् यदृच्छाहरे
रक्षावामन रोषराम करुणाकाकुत्स्थ हेलाहलिन् ।
क्रीडावल्लव कल्कवाहनदशाकल्किन्निति प्रत्यहं
जल्पन्तः पुरुषाः पुनन्ति भुवनं पुण्यौघपण्यापणाः ॥

पूर्वोदाहृतशाङ्करश्लोकप्रकारेण सर्वावतारानेकीकृत्याखण्डानुभवं प्रदर्शयत्यखण्डरमलब्धये । यद्यपि प्रत्येकं पूर्णत्वमस्त्येव भगवतः, तथाप्यनेकपूर्णसहानुभवजन्यो रसोऽखण्डतमः स्यात् । एकस्यैव दश भूमिकाः । तासामखण्डानुभवसंपादनमुचितम् । दशप्रकारविशिष्टाद्वैतानुभवो भवेत् । विशिष्टैक्यमवतारनाटकप्रदर्श्यम् । यथा सर्वचिदचित्प्रकारविशिष्टब्रह्मानुभवस्तथा सर्वावतारप्रकारविशिष्टप्रकार्यनुभवो निरूप्यते । प्रथमश्लोके समासः । अनन्तरं दशभिः श्लोकैर्व्यासः । पुनरपि निगमनरूपसमासः । तार्किकसिंहोऽयं कविसिंहोऽनुमानसरणिं न जहाति । प्रथमश्लोके प्रतिज्ञा । अत्र निगमनम् । विशिष्टवैशिष्ट्यावगाहिज्ञानरूपं फलं लभ्यते । प्रायेण तत्तत्पूर्वश्लोकोक्तानुभवा अत्रत्यैः शब्दैः सङ्गृह्यन्ते ॥

इच्छामीन । पूर्वं परोक्षतया प्रार्थना भगवतः । इदानीं तत्तच्छ्लोकानुभवेनाध्यक्षितं भगवन्तं समक्षं संबोधयतीत्य-

वधेयम् । अध्यक्षितो भावुकैरिति यदुक्तं तदन्वर्थितम् । शुभमातनोत्विति प्रार्थितं फलितम् । भक्तानुजिघृक्षया प्रदर्शितडोलारोहविषयो दोहद इच्छाशब्देन प्रत्यभिज्ञाप्यते । अस्मदनुग्रहे दोहदस्तस्य, यथा गर्भिण्याः । वीक्षणैः प्रजारक्षणं मत्स्यानां स्वभाव इत्युक्तम् । वीक्षणस्येच्छापर्यायत्वं वेदान्तेषु । ब्रह्ममीनस्यास्येक्षणं सङ्कल्पार्थकम्, यथा 'तदैक्षत बहु स्यां प्रजायेय' इत्यत्र ॥

विहारकच्छप । 'विहरते देवः सहैव श्रिया' इत्युक्तविहारप्रत्यभिज्ञापनम् । कूर्मस्य ध्यानम् । प्रत्याहारे स दृष्टान्तीक्रियते । तस्य च कथंचिद्व्यञ्जनं विहारशब्देन ॥

महापोत्रिन् । पूर्वोक्तपोत्रिशब्दस्यैव ग्रहणम् । पवित्रशब्दसन्निकृष्टत्वात् । मीनशब्दो दिव्यप्रबन्धप्रयुक्तशब्दपरिग्रहाय । कच्छपशब्दः 'मत्स्याश्वकच्छप—' इति शुकोक्तानुवादाय । महच्छब्दो बृहत्त्वोपपादकः । तन्नाम्नस्तत्त्वस्य स्मारणेनेच्छासङ्ग्राहकबुद्धिग्रहणाय च । स्वबुद्ध्या स्वेच्छयायं पोत्र्यभवत् ॥

यदृच्छाहरे । यादृच्छिकात्प्रादुर्भवनादित्युक्तं स्मार्यते । यदृच्छाप्रादुर्भूतोऽयं हरिः । हरिर्नित्यहरिः स्यात् । अयं

यदृच्छाहरि: । हरिरपि रामो हनुमन्तं हरित्वेन संबोधयति 'बत्त्वयोपकृतं हरे' इति । तस्य हरिर्हनूमांस्तदापदुद्धारक: । नरत्वमध: कृतं नरहरिणैव । अतो हरित्वमात्रेण संबोधनम् ॥

रक्षावामन । आश्रितमिन्द्रम्, तच्छत्रुं बलिम्, उदासीनं त्रिलोकं च ररक्ष । त्रीन् ररक्ष यथा तत्पादसलिलम् । सुहृद्दुर्हृदुदासीनत्रयाणामपि रक्षकत्वात्तस्य रक्षा असाधारणी एष ह्येव वामनी: । सर्वाणि वामानि नयति । अयं वामन: कथं रक्षकादन्यो भवेत् ॥

रोषराम । अस्य नाममात्रं राम इति । विरुद्धमपि कश्चिन्नाम भवेद्यथार्कस्य महावृक्ष इति नाम । यौगिकार्थनिर्बन्धेऽयं क्षत्त्रविरामकरो राम: । रोष एवायं रमते । अतो रोषराम: ॥

करुणाकाकुत्स्थ । नात्र लोकरामे रामशब्द: । जामदग्न्यविषयप्रयुक्तरामशब्देन नास्य तदनन्तरमेव संबोधनं न्याय्यं स्यात् । काकुत्स्थ इति श्रीशाङ्करनामानुवादो वा । पारावारेत्यादिश्लोक: कृत्स्नोऽपि करुणाप्रतिपादक: ॥

हेलाहलिन् । हलिनो हेला युज्यत इति व्यज्यते ॥

क्रीडावल्लव । कुहनागोप, मिथ्यागोप । देव इत्युपक्रमे व्यञ्जितस्य क्रीडनस्यात्र कण्ठोक्तिः ॥

कल्कवाहनदशाकल्किन् । कल्कीत्युक्तं तदवतारवर्णनश्लोके । कल्क इति कलङ्कार्थकः स्यात् । कलियुगेऽवतरन् कल्की सकल्कः स्यात् । तद्व्यावृत्त्यर्थं कल्कशब्दस्य श्वेताश्व इत्यर्थो वर्ण्यते । कल्करूपश्वेताश्ववाहनदशायामयं कल्की भवति । नायं कल्करूपकलङ्कवान् । भाविन्यां कल्कवाहनदशायामयं कल्की । कथमसिद्धस्य भविष्यतः संज्ञाकरणम्, तस्य च संबोधनमिति चेत्, 'अस्य सूत्रस्य शाटकं वय' इत्यादाविव भाविनीमवस्थामाश्रित्यापि संज्ञाकरणं संभवेदिति बोध्यते । नायं प्रकार्यसिद्धः । प्रकारमात्रं भावीत्यपि व्यज्यते । कल्कवाहनदशायामयं कल्की भवति । तेन प्रकारेणायं कल्की, नेतरथा दोषवत्त्वादिना । 'भाविन्या दशया भवन्' इति वर्णनानुगुणोऽयं पाठः । कल्कवाहन दशाकलिपन्निति पृथक्पाठो वा । इतिशब्दस्याभ्यासस्तदा अपेक्ष्येत । इति दशाकलिपन्निति प्रत्यहं जल्पन्तः ॥

इति प्रत्यहं जल्पन्तः । न पूर्वोक्ततत्तदवतारविषयश्लोकानां जल्पनमपेक्ष्यते । एतच्छ्लोकोक्ततत्तन्नामावलीपठनमप्यलम् । न सम्यङ्नामपठनमप्यपेक्ष्यते । तज्जल्पनमप्यल-

मिति व्यज्यते । भावशून्यं स्वरनेत्राङ्गादिविक्रियारहितं जल्पनमप्यलम् । 'जामदग्न्यस्य जल्पतः' इति भीष्मोक्तवत् । न रोषरामस्य शास्त्रप्रवचने स्वरनेत्राङ्गविक्रियादिसंभवः । तस्य रोषरूपविक्रियैकैव । नान्या विक्रिया ॥

**पुरुषाः ।** पुरुषमात्रस्यैतन्नामजल्पनेऽधिकारः । नात्राधिकारिव्यवस्था ॥

**पुनन्ति भुवनम् ।** पवित्रयन्ति भुवनम् । 'तत्रोपजग्मुर्भुवनं पुनानाः' इति सप्ताहावधिजीवितं परीक्षितमनुग्रहीतुं श्रीभागवतं च श्रोतुमागतमहाभागर्षिसङ्घस्येव एषां भुवनपुनीतृत्वमिति तच्छब्दप्रयोगेण व्यज्यते । यथा ब्रह्माण्डः पवित्रीकृतो भगवद्द्रोणारवैरित्युक्तम्, तथैतेषां जल्पनैः पवित्रीक्रियन्ते भुवनानीति व्यज्यते ॥

**पुण्यौघपण्यापणाः ।** तत्तदवतारकथाश्रवणपठनादिभिः कोटिकोटिपुण्यलाभः श्राव्यते तत्तत्फलश्रुतिभिरिति प्रसिद्धम् । दशावतारनाम्नां जल्पनेन तत्फलं कृत्स्नमेभिः सञ्चितं भवति । पुण्यपण्यसंभारोऽनन्त एषाम् । एते सञ्चरन्तः पुण्यापणाः ; नैतेऽल्पपण्यापणाः, किं त्वोघपण्यापणाः । अल्पपण्यवणिजो द्रोणादिपरिमितप्रमाणैर्विक्रीणीयुः । एते रा-

शिपण्यवणिजो राशिभिर्विक्रीणीयुः । राशिपण्यापणाः पुण्यौघानेव लम्भयेयुर्नाल्पाल्पं द्रोणादिपरिमितं पण्यमिति व्यज्यते ओघशब्देन । एते आपणाः । न विक्रेतारो वणिजः । 'तं ज्ञानपण्यं वणिजं वदन्ति' इति ज्ञानविक्रेतारो गर्ह्यन्ते । पुण्यपण्यविक्रेता गर्ह्यततराम् । तेषामुरुसंभृतपुण्यपण्यराशयस्तेषु यत्किंचित्सौहार्दं यदा कदापि प्रकटितवद्भिर्देयत्वेन विभज्येरन् । अनन्तपुण्यसंभारवत्त्वादेते पुण्यपण्यापणाः । नात्र क्रयो विक्रयो वा । नात्र वणिक् कश्चित् । अवतारदशकस्यापि रहस्यवेत्तुरस्येह जन्मन्येव मुक्तिः सिद्धा । शरीरवियोगे सुहृदः साधुकृत्यामुपगच्छन्ति । अस्य भूरि पुण्यं विभज्यते सुहृद्भिः । सौहार्दमेव पण्यक्रयमूल्यम् । एतज्जल्पनस्य श्रवणमपि सौहार्दमेव । तन्मात्रेण पण्यलाभो भवतीति 'जल्पन्तः पुनन्ति' इत्यनेन द्योत्यते । जल्पितनामश्रोतृषु स्वभूरिपुण्यं सङ्क्रमयन्ति । वणिग्रहितपुण्यौघपण्यापणेऽस्मिन् यो यद्यत्पुण्यं वाञ्छति तत्तस्माल्लभेत श्रवणरूपसौहृदमात्रेण । नाल्पं लभ्येतास्मादापणात् । ओघैः पुण्यं लभ्येत । 'पण्यं न चेदस्ति तदस्तु पुण्यम्' इति नैषधे । एते संचरन्त आपणाः । पण्यसंभारस्यातिभूयस्त्वे संभारलघूकरणार्थं सद्यस्तस्य भूरिविनियोगाय पण्यौघानादाय बहिः

सञ्चरेयुः ; स्वल्पमूल्यार्थमपि वेगेन विक्रीणीयुरिति प्रसिद्धम् । एते पुण्यभारार्दितास्तद्दानाय पात्राण्यन्विष्यन्तश्चरन्ति ॥

**विद्योदन्वति वेङ्कटेश्वरकवौ जातं जगन्मङ्गलं**
**देवेशस्य दशावतारविषयं स्तोत्रं विवक्षेत यः ।**
**वक्त्रे तस्य सरस्वती बहुमुखी भक्तिः परा मानसे**
**शुद्धिः कापि तनौ दिशासु दशसु ख्यातिः शुभा जृम्भते ॥**

अवतारनामावलीर्जल्पन्तः पुरुषाः पुनन्ति भुवनम् । ते च भूरिपुण्यपण्यापणा इत्युक्तम् । आपणत्वरूपणेन भूरिपुण्यसंभारो नामजल्पनमात्रेण लभ्येतेत्यपि व्यञ्जितम् । तज्जल्पनमात्रश्रोतारस्तत्पुण्यभाज इत्यपि व्यञ्जितम् । इदानीं मास्तु नाम पठनम्, एतत्स्तोत्रविवक्षामात्रेण भूयः फलं लभ्येतेति तत्फलं कीर्त्यते ॥

**विद्योदन्वति ।** समुद्रशायी भगवांस्तत्र त्रिरवततार । यदि वयमुदन्वान्भवेम, अस्मासु सोऽवतरेदिति स्वस्योदन्वत्त्वं संपाद्यते कविना । नायं प्राकृतः क्षारसमुद्रः, क्षीरसमुद्रो वा । किं त्वप्राकृतशुद्धमधुरैकान्तविद्यासमुद्रः । कल्पान्तयूनो भगवतोऽयं प्रियस्तल्पो भवेत् । उदन्वत्यवतारस्य भगवतः प्रियत्वात्, अस्मिन्विद्योदन्वत्यवतारविषय-

स्तोत्रमवतर्तुं सुसांप्रतमिति व्यज्यते ॥

**वेङ्कटेश्वरकवौ** । कविर्भगवान् । कविरयं नटः । कविनटभूमिकास्तोत्रं कवौ जातम् । 'अहिरेव ह्यहेः पादान्विजानाति न संशयः ।' कविः कवेर्नटस्य भूमिकाः स्तौति । कवेर्जनिं कविः सम्यग्जानीयात् । युक्तमिदं देवेशस्यावतारस्तोत्रं वेङ्कटेश्वरो रचयामासेति ॥

**कवौ जातं जगन्मङ्गलम्** । यथा स्तुत्यः कविः स्रष्टा, स्तोता कविरपि स्रष्टा । स्तुत्यस्य कवेः स्वेतरसृष्टिर्नियतिकृतनियमवती सुखदुःखमयी । तस्य स्वावताररूपस्वसृष्टिस्तु नियतिकृतनियमरहिता स्वेच्छामात्रनिर्वृत्ता ह्लादैकमयी । स्तोतुः कवेः स्वेतरसृष्टिस्तथैव ह्लादैकमयी । निरतिशयह्लादैकमयमिदं स्तोत्रम् । कविरूपोदन्वति कविमतिमथा मथिते जातमिदं जगन्मङ्गलं स्तोत्रम् । यथा क्षीरोदधिमथने सर्वमङ्गला जाता, तथेदं जगन्मङ्गलं जातमेतदुदन्वन्मथने । यथा जातो भगवदवतारो जगत्कल्याणभूतस्तथेदं तज्जन्मस्तोत्रम् । यादृशं प्रतिपाद्यं भगवज्जन्म तादृशं तत्प्रतिपादकस्य स्तोत्रस्य जन्म । 'देवो नः शुभमातनोतु' इति शुभातननप्रार्थनायामेतत्स्तोत्ररूपजगन्मङ्गलविस्तारणमप्यन्तर्गतमिव ॥

देवेशस्य । यद्यप्ययं नटाग्रणीर्नायं नटेशः, किं तु तस्य देवस्यापीशो देवेश ॥

**दशावतारविषयस्तोत्रं विवक्षेत यः ।** एतत्स्तोत्रविवक्षामात्रस्य भूयः फलमस्ति । विविदिषामात्रस्य, वेदनस्य वा फलत्वेन साध्यत्वं स्यान्मतभेदेन यज्ञादिना । अस्या विवक्षायाः फलं स्यादेव । अवतारदशकविवक्षात्वात् । एकस्य ज्ञेयस्य ब्रह्मणो विविदिषा वा, वेदनं वा लिप्स्येतेति विप्रतिपत्तिः स्याद्यज्ञादिश्रुत्यर्थविषये । कथं भगवदवतारदशकविषयस्तोत्रविवक्षाया भूरिफलवत्त्वं न स्यात्? नात्र विविदिषापर्यन्तापेक्षा । विवक्षामात्रमलम् । अक्षरराशिग्रहणमात्रेऽध्ययनविधिपर्यवसानं प्रतिजानीते सूत्रकारः 'अध्ययनमात्रवतः' इति सूत्रं प्रणयन् ॥

**वक्त्रे तस्य सरस्वती ।** वक्त्रं खलु विवक्षति । तेन खलूच्चार्येत । वक्तरि वक्तुर्वक्त्रे सरस्वती सन्निधत्ते । 'स्नुषा दशरथस्याहम्' इति सीताया भूयान्बहुमानः श्वशुरे । श्वशुरस्यापि तुल्यं प्रेम स्नुषायाम् । भर्तुर्ब्रह्मणोऽक्षिदानं वेदसरस्वतीदानं च कृतं प्रथमेनावतारेण । इतरे चावतारा ब्रह्मदत्तवरासुरपीडानिवर्तनार्थं कृताः । कथं तादृशेषु श्वशुरावतारेषु सा न रज्येत । भगवत्स्तोत्रे तस्या भूरिरुचिरिति बोध्यते

ाभिट्टार्यैः 'भारत्या सहधर्मचाररतया स्वाधीनसङ्कीर्तनः' ति । एतद्दशावतारस्तोत्रविवक्षुवक्त्रे भारती सन्निधत्ते, श-दार्थज्ञानं सम्यक्तस्य दत्वा भगवदवतारांस्तेन सम्यक्स्ताव-यितुम । स्वस्या अपि तत्स्तवनेऽन्वयः स्यादिति । श्वशुरस्य गवतः स्तोत्रस्याज्ञकर्तृकपठनं सा न मृष्येत । अतो यो ा को वा जडोऽज्ञो एतत्स्तोत्रं विवक्षेत् तदिच्छाक्षण एव ा तद्वक्त्रे सन्निधत्ते तं ज्ञं कर्तुम् ।

**बहुमुखी** । न चतुर्मुखी, यथा नाथमुखेषु । 'वहति महिलामाद्यो वेधास्त्रयीमुखरैर्मुखैः' इति नाथमुखेषु चतुर्मुख-त्वमेव । अत्र तदधिकमुखत्वम् । तावत्कुतूहलं तस्याः । वि-द्योदन्वति कवौ जातेयं स्तोत्रसरस्वती। कथमेतां सरस्वती न बहुमन्येत ॥ ·

**भक्तिः परा मानसे** । यथा वक्त्रस्य सरस्वत्या शोभा, तथा मनसो भक्त्या शोभेति व्यज्यते । भक्तिरहितं मनो जडमुखवद्गर्हणीयम् । विद्योदन्वतीति भक्तिसागरे इत्यप्यभि-प्रेतम् । वेदान्ताचार्यप्रयुक्तविद्याशब्दस्य भक्तिवाचकत्वं स्पष्ट-म् । भक्तिसागरे जातस्यास्य स्तोत्रस्य विवक्षणे एतन्मातृ-भूता भक्तिजलधिः परा भक्तिः स्वसुतं प्रकाशयितुमिच्छन्ती मनसि नियतं सानुग्रहं सन्निदध्यात् । मनसि खलु विवक्षा

जाता ॥

**शुद्धिः कापि तनौ ।** विद्योदन्वति जातमिदं स्तोत्रं स्वविवक्षोर्विलक्षणं ब्रह्मवर्चसं ददाति । नातेजस्केन वचनमेतन्मर्षयेत् । स्वस्यातेजस्कपठनरूपाशुद्धिनिवारणाय स्वविवक्षुतनुं पठनात्पूर्वं विवक्षाक्षण एव विलक्षणशुद्धिमतीं करोति । परा भक्तिर्जाता मानसे । मोक्षः सिद्धः । स चैतज्जन्मावसान एव सिद्ध्येदवतारहस्यस्य ज्ञातत्वात् । अस्य स्तोत्रस्य विलक्षणं फलं विलक्षणकायशुद्धिजनकत्वम् । अजायमाने पुरुषे जाते तत्तनौ यादृशी विलक्षणा शुद्धिस्तादृशी देहशुद्धिर्भवति तद्विषयस्तोत्रविवक्षोः । तत्क्रतुन्यायः प्रेत्य फलं ददाति । इदमवतारस्तोत्रमिहैव भावितसादृश्यं ददाति ।

**दिशासु दशसु ख्यातिः शुभा जृम्भते ।** एकस्यावतारस्यैकस्यां दिशि यशःप्रथनेऽपि सङ्कीर्तयिषितदशावतारैर्दशस्वपि दिशासु यशः पूर्येत । वदान्यस्य बलेर्यशोऽष्टासु दिक्षु प्रख्यापितम् । 'उदाराः सर्व एवैते' इति कीर्तितस्योदारस्य यशो दशस्वपि दिक्षु तन्यते । एतद्रूपशुभख्यातितननमपि प्रथमप्रार्थितशुभान्तर्गतमिव । 'यादृशी भावना यस्य सिद्धिर्भवति तादृशी' 'यशोऽहं भवामि ब्राह्मणानाम्' इत्यवतारूपशुभे आतते तद्विवक्षोर्ब्रह्ममात्रो-

पलक्षितब्राह्मणस्य यशस्तन्येत । शुभरूपावतारविस्तारणं यशोविस्तारणे पर्यवस्यति । यशोव्याप्तदिक्संख्या आततावतारसंख्यासमाना ॥

जृम्भते । वर्धतेऽभिवर्धते च । देवो जृम्भत इत्युपक्रमोपसंहारावेकीकृत्य लभ्यते । वर्धतेऽभिवर्धते च देवः । तज्जृम्भणे रसो जृम्भेत ॥

जृम्भतामिदमाचार्यस्तोत्रम् । तद्रसश्च वर्धतामभिवर्धताम् ॥

आचार्यरसविज्ञानं गोपालस्य कथं भवेत् ।
अवतीर्णः साहसेऽस्मिन्बालोऽयं वीक्ष्यतां शुभम् ॥

इत्थं गोपालदासेन वात्स्यवेङ्कटसूनुना ।
रचितं निगमान्तार्यस्तोत्रव्याख्यानमादरात् ॥





# शुद्धिपत्रिका ॥

| पृष्ठम् | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ३ | ७ | अव्य | आव्य |
| ४ | २ | स्थायीभावस्य | स्थायिभावस्य |
| १४ | १० | हनित्वा | हनित्वा |
| २० | ८ | बृहत्त्वोपादनाय | बृहत्त्वोपपादनाय |
| २७ | ९ | मोक्षेण समयातीतत्वं | मोक्षणसमयातीतत्वं |
| २९ | ९ | स्त्रीचित्तानां स्त्रीमयानां विटानां | स्त्रीचित्तैः स्त्रीमयैर्विटैः |
| ,, | ११ | ब्रह्मचित्तानां ब्रह्ममयानां ब्रह्मविदां | ब्रह्मचित्तैर्ब्रह्ममयैर्ब्रह्म-<br>विद्भिः |
| ३४ | १८ | ब्रह्मापराक्षण | ब्रह्मापरोक्षेण |
| ३६ | १८ | अव्यस्य | आव्यस्य |
| ४१ | १० | भावुकैरध्यक्षवदाचर्यते | भावुकैरध्यक्षवान् क्रि-<br>यते |
| ,, | ११ | भगवद्बुद्ध्येत्यपि | भगवान्स्वबुद्ध्येत्यपि |
| ,, | १५ | यदेकत्रोत्पन्नमन्यान्द्रष्टॄन् | यदेकत्रोत्पन्नोऽन्यान्द्र-<br>ष्टॄन् |
| ४६ | १ | मत्स्याक्षीणामेव | मत्स्याक्ष्णामेव |
| ,, | १० | मार्गते | मृगयते |
| ,, | ११ | तानुज्जीवयितुं च । | तानुज्जीवयितुम् । |

| | | | |
|---|---|---|---|
| ४९ | ३ | नष्टद्रव्यरूपोच्चैः श्रवसैरावत- | नष्टद्रव्यरूपोच्चैःश्रवैरावत |
| ५० | ५ | स्वनिश्वसितैर्वेदनिश्चारणम्। | स्वनिःश्वसितैर्वेदनिःसारणम्। |
| ,, | १७ | वेदमन्त्रभूतः | वेदमन्त्रपूतः |
| ५१ | २ | निश्वसितसंस्कृतमयः | निःश्वसितसंस्कृतपयः |
| ५४ | १९ | सागरान्तं | सागरान्तः |
| ५६ | ३ | घोणाया | घोणया |
| ५८ | १४ | खुरदग्रप्रमाणे | खुरदग्रे |
| ,, | १७ | स्फुरद्धुतसटाभ्राम्यद्ब्रह्मा | स्फुरद्धुतसटाभ्राम्यद्ब्रह्म- |
| ५९ | ५ | सदावधूता | सटावधूता |
| ,, | ८ | स्वं | खं |
| ,, | १९ | विष्णोर्व्याप्तिरूपब्रह्म | विष्णोर्व्याप्तिरूपबृह् |
| ६० | ९ | यियासन्तं | यियासुं |
| ,, | १९ | प्रतियास्यामि | प्रत्यायास्यामि |
| ६९ | १० | तन्नालीकसृष्टब्रह्मसृष्टं | स्वनालीकसृष्टब्रह्मसृष्टं |
| ८२ | १३ | चोद्यतो | चोद्धतो |
| ९२ | ४ | ब्रह्मत्वप्रदर्शिका | ब्रह्मत्वप्रदर्शका |
| ,, | ६ | विश्वगोपत्वं | विश्वगोप्तृत्वं |
| ९३ | २ | तन्मूर्धरत्नीनकर- | तन्मूर्धरत्ननिकर- |
| ,, | १४ | सह कर्तृत्वमुच्यते | सहकर्तृत्वमुच्यते |

